THE

HARIDAS SANSKRIT SERIES

140.

THE

# PHAKKIKĀ PRAS'NOTTARĪ

EDITED & COMPILED BY

*Vyākaranāchārya,*

PT. S'RĪ SADĀSHIVA S'ĀSTRI JOSHI

॥ श्रीः ॥

# फक्किकाप्रश्नोत्तरी

व्याकरणाचार्य-साहित्योपाध्याय—

जोशीत्युपाह्वपण्डितसदाशिवशास्त्रिभिः सङ्कलिता

तैरेव परिष्कृत्य संशोधिता च ।

PUBLISHED BY

JAYA KRISHNA DĀS HARIDĀS GUPTA

*The Chowkhamba Sanskrit Series Office,*

Benares City.

1941

# भूमिका

विदितमेव तत्रभवताम्भवताम्, यत्किल वैयाकरणसिद्धान्तकौमुदीस्थफक्किकानां कीदृशं काठिन्यं छात्राणां बोधने लेखने चासीदिति। तत्र मया छात्राणां फक्किकार्थबोधनलेखनकाठिन्यक्लेशदूरीकरणाय 'फक्किकाप्रश्नोत्तरी' निरमायि। अत्र प्रश्नोत्तर्यां तत्तत्फक्किकासु कीदृक् प्रश्नः सम्भवेत्, कथञ्च तस्य प्रश्नस्योत्तरमिति सम्यग्विचार्य तत्तत्फक्किकासु प्रश्नः उत्तरञ्च व्यरचि। अनेन छात्राणां सम्यक् बोधः स्यात्; लेखनेऽपि प्राविण्यं भवेदिति मे मतिः, किमधिकम्। यदि छात्रः इमां प्रश्नोत्तरीं कण्ठस्थां कुर्यात्; मन्येऽहं सः प्रथमश्रेण्यामुत्तीर्णो भवेदिति। अत्र संज्ञाप्रकरणादारभ्य कृदन्तान्ताः सर्वाः फक्किकाः व्याख्याताः सन्ति। केवलमनेनैकेनैव ग्रन्थेन फक्किकासु छात्राणां सम्यगुपकारो भवेदिति ग्रन्थावलोकनत एवानुभवो भवेदिति तत्र किमधिकं लेखनेन। अस्मिन् सङ्कलने श्रीमान् प्रकाशकमहोदयः श्रेष्ठी गोलोकवासि-हरिदासगुप्तात्मज-**जयकृष्णदासो** मामतीव प्रोत्साहितवान्। श्रेष्ठिन आग्रहवशंवदेन छात्रहितैषिणा मया यथाशेमुषि प्रश्नोत्तरी सङ्कलिता, तत्र यदि भ्रमप्रमादेन काश्चन त्रुटयः स्युः, ता द्वितीयसंस्करणे निरस्ता भविष्यन्तीत्यलम्।


विदुषामनुचरः—

**सदाशिवशास्त्री जोशी**

**व्याकरणाचार्यः, साहित्योपाध्यायश्च।**

# प्रकरणानां सूची—



इति प्रकरणानां सूची ।

---

# फक्किकानां सूची ।

इति श्रीवैयाकरणसिद्धान्तकौमुदीस्थफक्किकानां सूची ।



॥ श्रीगणेशाय नमः ॥

# फक्किकाप्रश्नोत्तरी

शिवं सर्वविद्यानिधानं प्रणम्य
मुनीन् सूत्रकारादिकान् स्वान् गुरूंश्च ।
ब्रुवे व्याकृतेः फक्किकाप्रश्नतत्त्वम्,
परीक्षार्थिनां तोषहेतोर्निगूढम् ॥ १ ॥

**प्रश्नः—मुनित्रयं नमस्कृत्येत्यत्र "नमःस्वस्तिस्वाहा" इति चतुर्थी कुतो न इति प्रदर्श्य "परिभावस्तिरस्क्रिया" इत्यमरात् परिभाव्येत्यस्य विचार्येत्यस्यार्थे प्रमाणं प्रदर्शय ।**

**उत्तरम्**—ननु मुनित्रयं नमस्कृत्येत्यत्र स्वयम्भुवे नमस्कृत्येत्यत्रेवात्रापि "नमःस्वस्तिस्वाहा"इत्यादिना चतुर्थी स्यात्, इति चेद्, न । उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति परिभाषया "नमस्करोति देवान्" इतिवत् द्वितीयैव युयुक्तत्वात् । न च स्वयम्भुवे नमस्कृत्येत्यत्र स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यादिना चतुर्थी सिद्धा, एवं च "नमः स्वस्ति"इति सूत्रे नमःपदं व्यर्थमितिवाच्यम् । 'हरये नमः' इत्यत्र सम्बन्धसामान्ये षष्ठ्यां प्राप्तायां तद्बाधनाय तस्यावश्यकत्वात् ।

ननु "परिभावस्तिरस्क्रिया" इत्यमरकोशात्" सर्वत्र परिसमभिव्याहारे भूधातोरवज्ञानार्थस्यैव सम्भवात् व्यावर्त्याभावेन "परौ भुवो अवज्ञाने" इत्यत्र अवज्ञानग्रहणं व्यर्थं सत् ज्ञापयति—"धातूनामनेकार्थत्वम्" इति । एवञ्च भूधातोरवज्ञानातिरिक्तार्थस्यापि सम्भवात्; "मनसा परिभाव्य किञ्चित्" इत्यादिश्रीहर्षप्रयोगाच्च, विचार्येत्यर्थेऽपि न किमपि बाधकमिति दिक् ।

**प्रश्नः—लण् सूत्रेऽकारस्येत्संज्ञायां किं मानम् ? तस्य फलं च किम् ? इति दर्शय ।**

उत्तरम्—ऋलृवर्णयोः सावर्ण्यं प्राल्कारीयतीत्यत्र वृद्धेः "उरण् रपरः" इति रपरत्ववारणपर "लपरं वक्ष्यामि" इति भाष्यव्याख्यानावसरे कणसूत्रस्थाकारेण रप्रत्याहारमाश्रित्य रशब्दस्य रेफलकारोभयबोधकत्वमिति कैयटः।

ननु सर्वत्र रप्रत्याहारेणैव निर्वाहे "अतो लरान्तस्य" इत्यत्र लकारोच्चारणं व्यर्थमितिचेत्, न। तेन हि रप्रत्याहारस्यानित्यत्वज्ञापनात्। अत एव "रषाभ्याम्" "रदाभ्याम्" इत्यादौ न लग्रहणम्। तेन कल्पेन, प्रफुल्तामित्यादौ न दोष इति प्राञ्चः।

नव्यास्तु—"लपरं वक्ष्यामि" इत्यस्य उः स्थाने प्रयुज्यमानो योऽण् स रपरो भवति लपरश्च भवति इति व्याख्यानेन वक्ष्यामि इत्याहुः। अन्यथा "अतो लरान्तस्य" इति सूत्रे पाणिनिर्लकारं नोच्चारयेत्। रप्रत्याहारेणैव निर्वाहात्।

**प्रश्नः—"हलन्त्यम्" "आदिरन्त्येन सहेता" अनयोः परस्परापेक्षत्वेन अन्योन्याश्रयः कथम्? परिहारश्च कीदृक् इति साधूपपादय।**

**उत्तरम्**—'वाक्यार्थज्ञाने पदपदार्थज्ञानं कारणम्' इति नियमात् "हलन्त्यम्" इत्यत्र "अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः" इत्यमरकोशात् अन्त्यपदस्य बोधसत्त्वेऽपि हल्पदस्य बोधः पाणिनिसङ्केतज्ञानाभावात् न सम्भवति; इति तज्ज्ञानार्थं "आदिरन्त्येन सहेता" इति वाक्यार्थबोध आवश्यकः। "आदिरन्त्येन सहेता" इति वाक्यार्थबोधोऽपि इत्सञ्ज्ञाज्ञानमन्तरा न सम्भवति। "आदिरन्त्येन सहेता" इति वाक्यार्थबोधे इत्पदज्ञानमपेक्षितम्, तच्च "हलन्त्यम्" इति सूत्रार्थबोधमन्तरा न सम्भवति, हलन्त्यसूत्रेऽपि इत्पदार्थज्ञाने हल्पदार्थज्ञानमपेक्षितम्, तच्च "आदिरन्त्येन सहेता" इति वाक्यार्थबोधमन्तरा न सम्भवति, इति परस्परापेक्षत्वादन्योन्याश्रयः। अन्योन्याश्रयाणि कार्याणि न प्रकल्पन्ते, यथा "नौर्नावि बद्धा नेतरत्र त्राणाय भवति" इति भाष्यात्। अतस्तद्दोषपरिहाराय "हलन्त्यम्" इति सूत्रावृत्तिः क्रियते "हलन्त्यम्" "हलन्त्यम्" इति। तत्र प्रथमहलन्त्यमित्यस्य हलिति सूत्रेऽन्त्यम् इत् भवतीति। इत्सञ्ज्ञाज्ञाने जायमाने "आदिरन्त्येन सहेता" इत्यनेन हल्पदबोधः सुकरः। हल्पदबोधे जायमाने द्वितीयहलन्त्यमित्यस्य वाक्यार्थबोधे कस्याप्यपेक्षाविरहात् नान्योन्याश्रयः। आवृत्तौ प्रमाणं हि "न विभक्तौ तुस्माः" इति सूत्रमेव। तदभावे हि हलन्त्यमित्यस्य वाक्यार्थानिष्पत्तौ "न विभक्तौ" इतिनिषेधो व्यर्थ एव स्यादिति दिक्।

**प्रश्नः—अक्, अच्, हल् इत्यादिप्रत्याहारेषु इत्संज्ञकानां ग्रहणं**

कुतो न भवतीति वद ।

उत्तरम्—ननु "लण्" सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा इति न युक्तम्, टकारस्याऽपि मध्यपतितत्वादितिचेद् ? न । "अनुनासिक" इत्यादिनिर्देशेन "प्रत्याहारेष्वितां न ग्रहणम्" इति ज्ञापनात् । अन्यथा अनुनासिक इत्यत्र ककारस्याच्प्रत्याहारान्तःपातित्वाद्धल्त्वमादाय यणापत्तिः स्यात् ।

न च इत्त्वविधानसामर्थ्यात् न यणः प्राप्तिरिति वाच्यम् । शास्त्रस्य साक्षाद्बाधकल्पनापेक्षया प्रत्याहारेऽनुबन्धानामग्रहणमित्यत्रैवेत्वविधानस्य ज्ञापकत्वे लाघवात् । "पापाणके कुत्सितैः" "एङः पदान्तादति" इति निर्देशा अप्यत्र ज्ञापकत्वे मानत्वाच्चेत्यलम् ।

प्रश्नः—"नाज्झलौ" इत्यनेन वर्णसमाम्नायस्थानामेव सवर्णसंज्ञानिषेधात् विश्वपाभिरित्यत्र "हो ढः" इति ढत्वं कुतो न ।

उत्तरम्—"पूर्वं वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्संज्ञोत्तरकाला प्रत्याहारसिद्धिः, तदुत्तरकाला सवर्णसंज्ञा, तदुत्तरं नाज्झलाविति निषेधः, तदुत्तरं ग्राहकता शक्तिः ? एतेन सर्वेण समुदितेनान्यत्र सवर्णानां ग्रहणं भवति, न स्वस्मिन्नपि स्याद्धि," इति भाष्योक्तरीत्या "तुल्यास्यप्रयत्नं सवर्णं" "नाज्झलौ" इत्येताभ्यां प्राक् ग्रहणकशास्त्रस्यासिद्धया "नाज्झलौ" इत्यस्य वाक्यार्थबोधावसरे ऽच्पदेन वर्णसमाम्नायस्थानां ह्रस्वानामेव ग्रहणात् । तेषामेव सवर्णसंज्ञानिषेधेन दधिशब्दात् शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । दीर्घादीनां च हल्भिः सह सावर्ण्यमस्त्येव । अत एव 'कुमारी शेते' इत्यत्र सवर्णदीर्घवारणाय "अकः सवर्णे दीर्घः" इति सूत्रेऽचिग्रहणानुवर्तनं सफलम् । नन्वेवं विश्वपाभिरित्यत्र हकारस्याकारसवर्णत्वात् "हो ढः" इति ढत्वं स्यादिति चेद्, न । "कालसमयवेलासु तुमुन्" इत्यादिनिर्देशेन नाज्झलावित्यत्राकारप्रश्लेषात्, आकारस्यापि हलः सावर्ण्यनिषेधादित्यलम् ।

प्रश्नः—"अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्मिन् सूत्रे अण् इति पूर्वणकारेण परणकारेण वा प्रत्याहारो ग्राह्य इति सप्रमाणं लिख ।

उत्तरम्—"अणुदित्सवर्णस्य चाप्रत्ययः" इत्यस्मिन् सूत्रे अण् परेणैव णकारेण गृह्यते "ऋत उत्" इत्यत्र तपरकरणाल्लिङ्गात् । तथाहि—पूर्वणकारेणाण्प्रत्याहाराङ्गीकारे ऋकारस्याण्त्वाभावात् "अणुदित्" सूत्रेण सवर्णग्राहकताऽप्र-

सक्तौ तद्व्यावृत्त्यर्थं तत्र कृतं तपरकरणं व्यर्थं सत् उक्तार्थे ज्ञापकम् । परणकारेण ग्रहणे तु ऋकारस्याण्त्वेन ग्राहकशास्त्रप्रवृत्त्या प्राप्तसवर्णग्रहणव्यावृत्तये तपरकरणस्य सार्थक्यम् ।

वस्तुतस्तु इदं प्रमाणं न मनोरमम् । लृकारग्रहणेन चारितार्थ्यात् । एवं च "उरृत्" इत्यत्रत्यतपरकरणस्योक्तार्थे ज्ञापकत्वं बोध्यम् । तथाहि-चुरादिण्यन्तात् "कृतधातोर्लुङि अचीकृतत्, इत्यत्र दीर्घं ऋकारस्थाने ह्रस्वऋकार एव यथा स्या-दित्येतदर्थं तत्र तपरकरणं क्रियते । अत्र पूर्वणकारेणाण्ग्रहणे तु उद्देश्येन विधे-येन च ऋकारस्याणभिन्नत्वेन भिन्नकालस्याग्रहणात् न तस्य स्थानित्वस्य न वा आदेशस्य प्रसक्तिरिति व्यर्थमेव तत् । ज्ञापिते तु उक्तार्थे ऋकारस्याण्त्वात् ग्राह-कशास्त्रेण सवर्णत्वबोधनात् दीर्घादेशापत्तिरिति तद्व्यावृत्त्यर्थं तकारोपादानं स्वांशे चरितार्थमित्यलं पल्लवितेन ।

**प्रश्नः—"येन विधिस्तदन्तस्य" इत्यस्मिन् सूत्रे येन इति तृती-यान्तस्य कोऽर्थः ? "समासप्रत्ययविधौ प्रतिषेधः" "उगिद्वर्णग्रहण-वर्जम्" इत्यनयोः वार्तिकयोः फलं च विवेचनीयम् ।**

उत्तरम्—येन इति करणे तृतीया करणस्य व्यापारवत्त्वनियमात्, अन्येषां च व्यापाराभावात्, विशेषणमेव अत्र करणतृतीयान्तेनोच्यते । तत्र च इतरव्या-वृत्तिकरणमेव व्यापारः, तत्र शब्दोपस्थितविशेषणस्य तादृशं विशेषणमेव तदन्तग्रा-हकम् । क्वचित् सति गमके अतादृशं शब्दरूपं विशेष्यमादायापि तदन्तविधिः । अत एव "इन्हन्" इत्यादिविषये तदन्तविधिः ।

"समासप्रत्ययविधौ प्रतिषेधः" एतद्वार्तिकम् । समासविधौ प्रत्ययविधौ च तदन्तविधेः प्रतिषेधो वाच्यः । तेन कृष्णं परमश्रितः इत्यत्र "द्वितीयाश्रितातीत" इति समासो न भवति, समासविधित्वेन तदन्तविधेरभावात् । सूत्रनडस्य गोत्राप-त्यं सौत्रनाडिरित्यत्र च "नडादिभ्यः फक्" इति फक् न भवति, प्रत्ययविधित्वेन तदन्तविधेरभावात् ।

नन्वेवं पचन्तमतिक्रान्ता अतिपचन्तीत्यत्र "उगितश्च" इति उगिदन्तात्प्रा-तिपदिकात् विहितो ङीप् न स्यात्, प्रत्ययविधौ तदन्तविधेः प्रतिषेधात् । तथा "अत इञ्" इत्यनेन अस्यापत्यम् इः इत्यत्रैव इञ् प्रत्ययः स्यात्, अदन्तदक्षश-ब्दात् दक्षस्यापत्यं दाक्षिः इत्यत्र इञ् न स्यादिति चेद्, न । "उगिद्वर्णग्रहणवर्ज-

म्" इति निषेधात् । तस्य ह्ययमर्थः—उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा "समासप्रत्ययविधौ" इत्युक्तः प्रतिषेधो भवति । उगिद्वर्णग्रहणे तु "येन विधिः" इति तदन्तविधिरस्त्येव । तत्श्च अतिपचन्तीत्यत्र उगिदन्तप्रातिपदिकात् "उगितश्च" इति ङीप् , दाक्षिरित्यत्र अवर्णान्तादिञ् च सिद्ध्यतीति दिक् ।

**प्रश्नः—"नवेति विभाषा" इत्यस्यार्थः, फलञ्च संक्षेपेण लिख ।**

**उत्तरम्**—अत्र न वा, इति विभाषा इति च पदत्रयम्'इतिर्लोके अर्थपदार्थकस्य शब्दपदार्थकत्वकृत् । यथा—गवित्ययमाह इत्यादावनुकरणे । अस्मिन् सूत्रे तु स्वंरूपमिति परिभाषणात् शब्दपदार्थकस्य अर्थपदार्थकत्वकृत् । स च न वा शब्दाभ्यां प्रत्येकं सम्बध्यते, व्याख्यानात् । तेन न वा शब्दयोरर्थौ संज्ञिनौ । प्राप्तविभाषासु नास्योपयोगः । तासां पक्षे निवृत्तिमात्रफलकत्वात् । अप्राप्तविभाषास्वपि न । तासां पक्षे विधिमात्रार्थकत्वात् । अप्राप्तत्वेन निषेधासम्भवाच्च । तस्मादुभयत्र विभाषार्थमिदम् ।

तथाहि—द्विवचनबहुवचनेष्वपित्सु "वचिस्वपियजादीनां किति" इति नित्यतया सम्प्रसारणं प्राप्तम्, पित्सु त्वेकवचनेषु सम्प्रसारणं न प्राप्तम् , "असंयोगाल्लिट्कित्" इति कित्वस्यापित्स्वेव प्रवृत्तेः । एवं च प्राप्तेऽप्राप्ते चारम्भात् "विभाषाश्वेः" इत्युभयत्र विभाषा इति स्थितिः । तत्र हि श्रुतक्रमानुरोधात् पूर्वं कित्सु निषेधः । तत्र किदकिद्रूपे सर्वस्मिन् लिटि ऐक्यरूपं प्रापिते सति पक्षे भवतीत्येकरूपेण विधिमुखेनैव विकल्पः । यथा—शुशाव, शिश्वाय, इत्यत्रेति दिक् ।

**प्रश्नः—"प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया "सुप्तिङन्तं पदम्" इति सूत्रघटकसुप्तिङोः प्रत्ययत्वेन तदन्तग्रहणे सिद्धे अन्तग्रहणं किमर्थमिति विवेचनीयम् ।**

**उत्तरम्**—"प्रत्ययग्रहणे तदन्ता ग्राह्याः" इति परिभाषया सुप्तिङोः प्रत्ययत्वेन तदन्तग्रहणे सिद्धे अन्तग्रहणं व्यर्थं सत् ज्ञापयति—"संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती"ति (संज्ञानिष्ठविधेयतानिरूपिता या प्रत्ययमात्रवृत्तिसाक्षादुद्देश्यता तत्प्रयोजकं पदं यत्र तत्र तत्रादिविशेष्यकतदन्तग्रहणं नास्तीति) तेन घसंज्ञा तरप्तमपोरेव न तदन्तस्य । तेन गौरीब्राह्मणितरा इत्यत्र न ह्रस्व इति दिक् ।

इति संज्ञाप्रकरणम् ।

## अथ परिभाषाप्रकरणम् ।

**प्रश्नः—आन्तर्यं कति विधम् ? तेषां लक्ष्याणि च प्रदर्श्य 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' इत्यस्य फलं वद ।**

उत्तरम्—आन्तर्यं चतुर्विधम्, स्थानार्थगुणप्रमाणभेदात् । स्थानतो यथा—"दध्यत्र" अत्र तालुस्थानस्येकारस्य स्थाने तालुस्थानीययकारो जातः । अर्थतो यथा—"पद्भ्नोमास" इति पादशब्दस्य पद्‌आदेशः । गुणतो यथा—"वाग्घरिः" अत्र संवारस्य नादस्य घोषस्य महाप्राणस्य हस्य तादृश एव घकारः । प्रमाणतो यथा-अमुम्, अमू, अमून् । "अदसोसेरि"त्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य च दीर्घ ऊकारः।

चेता, स्तोता, इत्यत्र "पुगन्तलघूपधस्य च" इत्यनेन इकारोकारयोः स्थानत आन्तर्याद् एकारौकाररूपे गुणे प्राप्ते प्रमाणत आन्तर्याच्च अकाररूपे गुणे प्राप्ते "यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः" इति परिभाषया स्थानत आन्तर्यस्य बलवत्वात् एकारौकारौ स्त एवेति दिक् ।

**प्रश्नः—"अष्टाभ्य औश्" इत्यादौ "आदेः परस्य" इयं परिभाषा "अनेकाल्शित्सर्वस्य" इत्यनया कथं बाध्यते तत्प्रदर्शय ।**

उत्तरम्—'अष्टा जस्' इति स्थिते, अत्र "अष्टाभ्य औश्"इत्यनेन औश् प्राप्तः । स च "तस्मादित्युत्तरस्य" इति परिभाषया अष्टन्शब्दाव्यवहितपरस्य प्राप्तः, तत्रानेकाल्त्वात् सर्वादेशे प्राप्ते, "आदेः परस्य" इत्यनेन आदेरेव प्राप्ते, तत्र "तुल्यबलविरोधे परं कार्यम्" इति परस्य प्राबल्यत्वेन "अनेकाल्शित्सर्वस्य" इति सर्वादेशः ।

ननु "अन्यत्रान्यत्र लब्धावकाशयोरेकस्मिन् लक्ष्ये युगपत् प्रवृत्तिर्विप्रतिषेधः" स च प्रकृते नास्तीति चेदुच्यते । "आदेः परस्य" इत्यस्यावकाशः "अन्तरुपसर्गेभ्योऽप ईत्" इत्यादौ । "अनेकाल्शित्सर्वस्य" इत्यस्यावकाशः "अस्तेर्भूः" "इदम ईश्"इत्यादौ । "अष्टाभ्य औश्" इत्यादौ तूभयोर्युगपत्प्रवृत्तिरिति अस्तीह प्रकृते विप्रतिषेध इति दिक् ।

**प्रश्नः—"परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इत्यस्योदाहरणानि क्रमशो ब्रूत ।**

उत्तरम्—परान्नित्यं यथा—तुदति परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शः । परादन्तरङ्गं यथा—उभये देवमनुष्याः । इह "प्रथमचरम" इति परामपि

विकल्पेन प्राप्तां सर्वनामसंज्ञां बाधित्वा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् "सर्वादीनि" इति सर्वनामसंज्ञा भवति, परादपवादो यथा-'दध्ना, दध्ने इत्यत्र "अस्थिदधि" इत्यनङ् परमपि अनेकालिति सर्वादेशं बाधित्वा "ङिच्च" इत्यपवादेनान्तादेशः । नित्यादन्तरङ्गं यथा—'ग्रामणिनी कुले' नित्यमपि "इकोऽचि" इति नुमं बाधित्वा "ह्रस्वो नपुंसके" इत्यन्तरङ्गत्वाद्ध्रस्वः । कृते तु नुमि, अनजन्तत्वात ह्रस्वो न स्यात् । अन्तरङ्गादपवादो यथा—'दैत्यारिः, श्रीशः' परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद्गुणे यणि च प्राप्ते अपवादत्वात्सवर्णदीर्घ इति दिक् ।

इति परिभाषाप्रकरणम् ।

## अथाच्सन्धिप्रकरणम् ।

**प्रश्नः—'सुध्युपास्य' इत्यत्र स्थानिवद्भावः कथं निरस्तस्तत्प्रदर्शय, ।**

**उत्तरम्**—'सुधी उपास्यः' इति स्थिते अत्र "इको यणचि" इति सूत्रेण धकारोत्तरवर्तिन इकारस्य यणि आन्तरतम्यात् यकारे कृते 'सुधय् उपास्य' इति जाते अत्र "अनचि च" इति द्वित्वे कृते 'सुध्ध्य् उपास्य' इति भूते अत्र शङ्क्यते—ननु "स्थानिवदादेशोऽनल्विधौ" इत्यनेन यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्य अच्परत्वेन "अनचि च" इति द्वित्वनिषेधः स्यादिति चेत् , न । 'अनल्विधौ" इति स्थानिवद्भावनिषेधेनाच्परत्वाभावात् । न च "अचः परस्मिन् पूर्वविधौ" इति स्थानिवद्भावेनाच्त्वं स्यादिति वाच्यम् ? "न पदान्तद्विर्वचन" इति द्विर्वचने कर्तव्ये स्थानिवद्भावनिषेधादित्यलम् ।

**प्रश्नः—"अनचि च" इत्येव सिद्धे "वा हतजग्धयोः" इति किमर्थमिति ब्रूत ।**

**उत्तरम्**—ननु "वा हतजग्धयोः" इति व्यर्थम् , द्वित्वस्य तु "अनचि च" इत्यनेनैव सिद्धत्वादिति चेत् , न । क्तान्ते परे पुत्रशब्दस्य यदि द्वित्वम् , तर्हि हतजग्धयोरेव ; आक्रोश एव इति नियमार्थमावश्यकत्वात् । नियमफलं तु पुत्रचित्तिः, पुत्रकृतिरित्यादौ द्वित्वाभावः ।

ननु पुत्रहतीत्यादौ हतशब्दपरत्वाभावेन द्वित्वं न स्यादिति चेत , न । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषया द्वित्वप्रवृत्तेः सुवचत्वात ।

**प्रश्नः—"हलो यमां यमि लोपः" इति सूत्रस्य प्रयोजनं वद ।**

उत्तरम्—ननु ह्यनुभवः, नद्यत्ति, इत्यादौ "अचो रहाभ्यां द्वे" इति विकल्पेन द्वित्वे द्वियकारात्मकं रूपं, द्वित्वाभावपक्षे एकयकारात्मकं रूपम्, तत्र "हलो यमां यमि लोपः" इत्यनेन विकल्पेन लोपे एकयकारात्मकं, लोपाभावपक्षे तु द्वियकारात्मकं रूपमिति द्वित्वेन यत् सिद्धं तदनेनापीति, "हलो यमां यमि लोपः" इत्यस्य प्रयोजनं न किञ्चिदिति चेद् ? न । अदितेरादित्यस्य वा अपत्यम् आदित्यः, इत्यत्र आदित्यशब्दाद्देवतार्थे "दित्यदित्यादित्यपत्युत्तरपदाण्यः" इति ण्यप्रत्यये णकारस्येत्संज्ञायां लोपे च कृते भसंज्ञायाम् "यस्येति च" इत्यकारलोपे "हलो यमां यमि लोपः" इति विकल्पेन यलोपे एकयकारात्मकं रूपम्, लोपाभावपक्षे-द्वियकारात्मकं रूपमिति फलस्य सत्वात् ।

प्रश्नः—गव्यूतिरित्यत्र "लोपः शाकल्यस्य" इत्यनेन वलोपः कुतो नेति स्पष्टं वद ?

उत्तरम्—गव्यूतिरित्यत्र "ऊतियूति" इत्यादिना यूतिशब्दो निपातितः, गोशब्दस्य यूतिशब्देन समासे 'गो+यूति' इति स्थिते 'गोर्यूतौ छन्दस्युपसंख्यानम्" इत्यनेन "अध्वपरिमाणे च" इत्यनेन वा वान्तादेशे कृते गव्यूतिरिति जाते अन्तर्वर्तिनीं विभक्तीमाश्रित्य वकारस्य पदान्तत्वात् "लोपः शाकल्यस्य" इत्यनेन वलोपे प्राप्ते सति न भवति । "वान्तो यि" इत्यत्र वकारात्पूर्वभागे "लोपो व्योर्वलि" इति लोपेन वकारः प्रश्लिष्यते, तस्य च श्रूयमाणवकारान्त आदेशः स्यादित्यर्थात् । न च "वान्तो यि" इत्यत्र वकारस्य प्रश्लेषेऽपि तत्सूत्रे एव प्रश्लेषस्य फलम्, अत्र तु फलाभाव इति वाच्यम् ? "गोर्यूतौ छन्दस्युपसंख्यानम्" इत्यत्र छकारात्पूर्वभागे प्रश्लेषकरणेन समाधातुं शक्यत्वात् ।

प्रश्नः—"धातोस्तन्निमित्तस्यैव" इत्यत्र नियमाकारः कीदृशः ?

उत्तरम्—'लव्यम्, इत्यत्र 'लुञ्—छेदने, इति धातोः "अचो यत्" इति यति "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायाम् "सार्वधातुकार्धधातुकयोः" इति गुणे 'लो+यम्' इति स्थिते ओकारस्य प्रत्ययनिमित्तकत्वेन "धातोस्तन्निमित्तस्यैव" इत्यनेन वान्तादेशे रूपम् । 'अवश्यलाव्यम्' इत्यत्र तु आवश्यके उपपदे लुञ्धातोः "ओरावश्यके" इति ण्यति "मयूरव्यंसकादयश्च" इति समासे "लुम्पेदवश्यमः कृत्ये" इति मलोपे "अचो ञ्णिति" इति वृद्धौ 'अवश्यलौ+यम्' इति स्थिते औकारस्य प्रत्ययनिमित्तकत्वेन "धातोस्तन्निमित्तस्यैव" इत्यनेन वान्तादेशे

सति रूपम् । इह उभयत्र "वान्तो यि प्रत्यये" इत्यनेन वान्तादेशे सिद्धे "धातोस्तन्निमित्तस्यैव" इति "सिद्ध सति आरभ्यमाणो विधिर्नियमाय भवति" इति न्यायेन नियमार्थम् । नियमस्य सजातीयापेक्षत्वात् यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि प्रत्ययनिमित्तस्यैच एव नान्यस्य, तेन ओयत इत्यत्र आङ्पूर्वकात् वेञः कर्मणि लटि, यकि, सम्प्रसारणे पूर्वरूपे आङा सह आद्गुणे च 'ओयत' इत्यत्र प्रत्ययनिमित्तस्यैचोऽभावात् न वान्तादेशः । नियमाभावे तु पूर्वसूत्रेणात्र वान्तादेशापत्तिः स्यात् ।

ननु अन्तरङ्गवान्तादेशदृष्टया बहिरङ्गगुणस्यासिद्धत्वेन वान्तादेशाप्राप्त्या नावश्यकं तत्सूत्रमितिचेद् ? न । वेञः कर्मणि लङि यकि सम्प्रसारणे पूर्वरूपे आडागमे "आटश्च" इति वृद्धौ 'औयत' इत्यत्र वान्तादेशव्यावृत्यर्थं तस्यावश्यकत्वात् ।

**प्रश्नः—"धातोस्तन्निमित्तस्यैव" इति नियमेनैव अन्यव्यावृत्तिः सिद्धा, सूत्रे एवकारः किमर्थमिति दर्शय ?**

**उत्तरम्—**"सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति" इति न्यायेन नियमविधिसिद्धे तन्निमित्तस्यैवेति एवकारस्तु विपरीतनियमव्यावृत्यर्थः । एवकाराभावे हि यदि प्रत्ययनिमित्तकस्य चेदेचो वान्तादेशस्तर्हि धातोरेवैचः इत्यपि नियमः प्रतीयेत, तथाच बाभ्रव्य इत्यत्र वान्तादेशो न स्यादित्यलम् ।

**प्रश्नः—"कानि सन्ति कौ स्तः" अस्याः फक्किकायाः आशयः शङ्कासमाधानपुरःसरमुपपादनीयः ।**

**उत्तरम्—**ननु शब्दशास्त्रे पक्षद्वयं पदसंस्कारपक्षो वाक्यसंस्कारपक्षश्च, तत्र परस्परनिरपेक्षाणि पदानि संस्क्रियन्ते यत्रासौ पदसंस्कारपक्षः । एवं वाक्यादुद्धृत्य पदानि संस्क्रियन्ते यत्रासौ वाक्यसंस्कारपक्षः । तथाच—वाक्यसंस्कारपक्षे 'कानि सन्ति' इति वाक्ये प्रक्रियाक्रमेण पूर्वं 'किम्' शब्दः तदुत्तरं जस्, ततो अस् धातुः, तदुत्तरं झि इति किमः कादेशे जसः श्यादेशे नुमि दीर्घे च कानि इति सिद्ध्यति । अस्धातोः "श्नसोरल्लोपः" इत्यल्लोपे "झोऽन्तः" इति अन्तादेशे सन्तीत्यस्य सिद्धिः । एवं च स्थानिभूतादकारात् पूर्वत्वेन दृष्टस्येकारस्य यणि कर्तव्ये "अचः परस्मिन्" इति स्थानिवत्त्वेन अकारस्य सद्भावात् अस्त्येव यणः प्रसक्तिः । एवं कौ स्तः इत्यत्राऽपि "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण स्थानिवद्भावात् अकाररूपमच्त्वमाश्रित्यास्त्येव अवादेशस्य प्रसक्तिरिति चेद् ? न । यणादिरूपपरमाव-

यबकार्ये कर्तव्ये "न पदान्त"सूत्रेण स्थानिवद्भावनिषेधात् ।

**प्रश्नः—पुरस्तादपवादन्यायस्य किं स्वरूपम् ? बाध्यबाधकभावश्च कीदृशः ? 'अवैहि' इति वृद्धिः साधुर्नवेति प्रतिपादय ।**

उत्तरम्-"पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्" इति न्यायस्वरूपम् । पूर्वपठिताः अपवादाः अव्यवहितानेवोत्तरान् विधीन् बाधन्ते, न तु व्यवहितानित्यर्थः । प्रकृते च "एत्येधत्यूठ्सु"-इत्युत्तरं कानिचित् सूत्राणि पठित्वा "एङि पररूपम्" इति पठित्वा पुनः कतिपयसूत्राणि पठित्वा "ओमाङोश्च" इति पठितम् । ततश्च उक्तन्यायेन "एत्येधत्यूठ्सु" इति वृद्ध्या "एङि पररूपम्" इत्येव बाध्यते, न तु "ओमाङोश्च" इति पररूपमपीति । अपवादत्वरूपन्तु हि-"एत्येधत्यूठ्सु" इति सूत्रस्य यत्र यत्र अवर्णादेजादि इण् एधत्यन्यतरधात्ववयवअच्परत्वसत्वेन प्राप्तिविषयता तत्र तत्र उपएति प्रएधते इत्यादौ "एङि पररूपम्" इत्यस्य प्राप्तिर्वर्तते, इति "एत्येधत्यूठ्सु" इत्यस्यापवादत्वम् । यत्र क्वचित् 'अव एहि' इत्यादौ "एङि पररूपम्" "ओमाङोश्च" इत्युभयोः प्राप्तिर्वर्तते । "एत्येधत्यूठ्सु" इत्यस्य निरवकाशत्वेन अपवादत्वात् उभयबाधकत्वं प्रसक्तम् , तथापि सकललक्ष्यप्राप्तिविषयतया नाप्राप्त एङि पररूपबाधेन 'उप+एति' 'प्र+एधते' इत्यादौ वृद्धेश्चारितार्थ्येन "ओमाङोश्च" इत्यस्य बाधे निरवकाशत्वरूपबाधबीजस्य अभावेन उभयोस्तुल्यबलत्वे "विप्रतिषेधे परं कार्यम्" इति पररूपस्य परत्वात् प्रबलतया 'अव एहि' इत्यत्र प्रवृत्तिरिति 'अवेहि'इतिपररूपघटितं साधु, वृद्धिघटितं च असाधुरिति दिक् ।

**प्रश्नः—"प्रादूहोढोढ्येषैष्येषु" इतिवार्तिकेन प्रोढवान् इत्यत्रापि प्र उपसर्गात् ऊढपरत्वेन वृद्धिः स्यान्न वा इति प्रतिपादय ।**

उत्तरम्—"व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इत्यत्र केवलराजग्रहणेनैव षत्वसिद्धौ भ्राजग्रहणं व्यर्थं सज्ज्ञापयति-'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति । अर्थवतः शब्दस्य ग्रहणसम्भवे अनर्थकस्य शब्दस्य ग्रहणं न भवतीति तदर्थः । तेन "प्रादूहोढोढ्येष्येषु" इति वार्तिकस्थऊढपदेन सार्थकस्य तस्य ग्रहणात् प्रौढः इत्यत्र वृद्धिर्भवति, प्रोढवान् इत्यत्र क्तवतुप्रत्ययान्तऊढवत्शब्दघटकऊढइत्यस्य अनर्थकत्वेन तस्य अग्रहणात् अस्य वार्तिकस्य अप्रवृत्तौ "आद् गुणः" इति गुण एवेति दिक् ।

**प्रश्नः—'प्रार्छति' इत्यत्र अन्तवद्भावेन पदान्तत्वमादाय रेफस्य विसर्गः कुतो नेति वद।**

**उत्तरम्**—'प्र+ऋछति' इति स्थिते "उपसर्गादृति धातौ" इति सूत्रेण "स्थानेऽन्तरतमः" इति परिभाषैकवाक्यतया 'अनान्तर्यमेवैतयोरान्तर्यम्' इत्यान्तरतम्यादुपसर्गावयवाकारात् ऋकारादिऋच्छधात्ववयवे अचि परे पूर्वपरयोः स्थाने अकारैकादेशे "उरण् रपरः" इति रपरे च कृते 'प्रार्छति' इति सिद्धम्।

नन्वत्र "अन्तादिवच्च" इत्यनेन पूर्वस्थानिघटितसमुदायपर्याप्तपदत्वधर्मस्य एकादेशान्ते प्रार् इत्यत्रारोपेण रेफस्य पदान्तत्वात् "खरवसानयोर्विसर्जनीयः" इति विसर्गः कुतो नेति चेत्? न। "उभयथर्क्षु" "कर्तरि चर्षि" इत्यादिषु रेफस्य विसर्गाकरणपूर्वकं रेफविशिष्टनिर्देशेन अन्तवद्भावेन पदान्तत्वमाश्रित्य रेफस्य विसर्गाभावज्ञापनात्।

**प्रश्नः—उपसर्गेणैव धातोराक्षेपे सिद्धे पुनः धातुग्रहणं किमर्थमिति प्रतिपादय।**

**उत्तरम्**—'उप+ऋच्छति' इति स्थिते अत्र "उपसर्गादृति धातौ" इति सूत्रेण "स्थानेन्तरतमः" इति परिभाषैकवाक्यतया अनान्तर्यमेवैतयोरान्तर्यमित्यान्तरतम्यमादाय पूर्वपरयोः अकारऋकारयोः स्थाने आकाररूपवृद्ध्यैकादेशे "उरण् रपरः" इति रपरे 'उपार्छति' इति सिध्यति।

नन्वत्र "उपसर्गादृति धातौ" इति वृद्धिः कथम्? "ऋत्यकः" इति ह्रस्वसमुच्चितप्रकृतिभावः स्यादिति चेत्? न। "उपसर्गादृति धातौ" इत्यत्र 'धातौ' इति योगविभागं कृत्वा तत्र वाक्यभेदेन च 'उपसर्गादृति' इत्यनुवर्त्य पूर्वसूत्रविध्यनुवादभूतपुनर्वृद्धिविधानसामर्थ्येन प्रकृतिभावस्यापि बाधात्। न च पूर्वसूत्रे धाताविस्यस्य अभावे "उपसर्गादृति"इत्यस्य अधातावपि प्रवृत्तिः स्यादिति वाच्यम्। धाताविति ग्रहणाभावेऽपि उपसर्गेण तस्य आक्षेपसम्भवात्।

**प्रश्नः—उपेङ्कीयति प्रोघीयति, इत्यत्र पररूपं केन भवति, तत् प्रदर्शय।**

**उत्तरम्**—"एङि पररूपम्" इत्यत्र "वा सुपि" इत्यनुवर्तते। तच्चैकवाक्यतया सम्बध्यते। तथा सति अवर्णान्तादुपसर्गादेङादौ सुप्धातौ परे पररूपमेकादेशो वा स्यादित्येवार्थः स्यात्। एवं सति प्रेजते उपोषति इत्यत्र नित्यं पररूपं न

स्यात् । अतो वाक्यभेदेन व्याख्येयम् । तथाहि—"एङि पररूपम्" इति प्रथमं वाक्यम् । अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यादिति तदर्थः । "वा सुपि" इति द्वितीयं वाक्यम् । तत्र "एङि पररूपम्"इत्यनुवर्तते, धातौ उपसर्गादित्यादि च । ततश्च अवर्णान्तादुपसर्गादेङादौ सुब्धातौ परे पररूपमेकादेशो वा स्यादित्यर्थः । 'उप + एडकीयति' 'प्र + ओघीयति' इत्यत्र अनेन विकल्पेन पररूपे 'प्रोघीयति' 'उपेडकीयति' इति सिध्यतः । विकल्पाभावपक्षे तु "वृद्धिरेचि" इति वृद्धौ 'उपैडकीयति' 'प्रौघीयति इति स्तः ।

**प्रश्नः—"अकः सवर्णे दीर्घः" इति सूत्रे अचि इत्यनुवृत्तिः किमर्था ? तदुपपादय ।**

**उत्तरम्**—'कुमारी + शेते' इत्यत्र "अकः सवर्णे दीर्घः"इत्यस्मिन् सूत्रे अच्पदानुवृत्त्यभावे दीर्घेकारशकारयोः विवृतप्रयत्नतालुस्थानतुल्यत्वेन "तुल्यास्यप्रयत्नं सवर्णम्" इति सवर्णसंज्ञायां दीर्घेकारात् शकारे सवर्णे परे पूर्वपरयोः स्थाने दीर्घापत्तिः । न च "नाज्झलौ" इति सूत्रेण तयोः सावर्ण्यनिषेधः इति वाच्यम् ? तत्र सूत्रे अच्पदेन दीर्घादीनां ग्रहणाभावेन दीर्घादीनां हलांच परस्परं सवर्णसंज्ञानिषेधस्य वक्तुमशक्यत्वात् । अच्पदेन दीर्घादीनां ग्रहणम् "अणुदित्" सूत्रेण कर्तव्यम् ? तच्च न सम्भवति, "नाज्झलौ" इति सूत्रार्थविबोधकाले ग्रहणकशास्त्रस्य "अणुदित्" सूत्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्त्या "अणुदित्" सूत्रेण ग्राहकत्वेन बोधाभावात् ।

**प्रश्नः—"अवङ् स्फोटायनस्य" इत्यस्मिन् सूत्रे 'अति' इति कथं निवृत्तमिति प्रतिपादय ।**

**उत्तरम्**—"प्लुतप्रगृह्या" इत्यत्र-"नित्यग्रहणं किमर्थम् ? "इन्द्रे च" इत्यारम्भसामर्थ्यादेव नित्यत्वलाभात्" इति भाष्योक्तमेव प्रकृते 'अति' इति निवृत्तौ मानम् । अन्यथा 'गवेन्द्रः' इत्यादावत्परत्वाभावादवङोऽप्राप्त्या तदर्थं "इन्द्रे च" इत्यस्यावश्यकत्वादारम्भसामर्थ्यान्नित्यत्वलाभः इति भाष्यकारोक्तिरसङ्गता स्यात् । 'अति' इति निवृत्तौ 'अचि' इति मण्डूकप्लुत्यानुवृत्तिस्वीकारे च पूर्वसूत्रेणैव तत्रावङ्सिद्धौ "इन्द्रे च" इत्यस्य वैयर्थ्येन तत्सामर्थ्यात् 'नित्यमिति किम्' इति भाष्योक्तेः सामञ्जस्यमेवेति दिक् ।

**प्रश्नः—'व्यवस्थितविभाषया गवाक्षः' अस्या आशयः कः इति**

प्रतिपादय ।

उत्तरम्—क्वचिद्भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचिदुभयमित्येवं लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा, "सर्वत्र विभाषा गोः" इत्यत्राश्रीयते, ततश्च 'गवाक्ष.' इत्यत्र नित्यमेवावङ् भवतीत्यर्थः ।

## अथ प्रकृतिभावः—

**प्रश्नः—"प्लुतप्रगृह्या अचि नित्यम्" इत्यत्र नित्यग्रहणस्य फलं लिख।**

उत्तरम्—'हरी + ईशौ' इत्यादौ "प्लुतप्रगृह्या अचि नित्यम्" इत्येतत्सावकाशम्, 'चक्री + अत्र' इत्यत्र तु "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इति, ततश्च 'हरी एतौ' इत्यादौ परत्वात् "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इति ह्रस्वसमुच्चित एव प्रकृतिभावो भवेत् । नित्यग्रहणे तु तत्सामर्थ्येन प्लुतस्य प्रगृह्यसंज्ञकस्य चाचि परेऽयमेव प्रकृतिभावो नान्य इति बोध्यते । तेन 'हरी + एतौ' इत्यत्र द्विवचनान्तस्य ईकारान्तस्य "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञायामयमेव प्रकृतिभावो भवति, न तु "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इति ह्रस्वसमुच्चित इति दिक् ।

**प्रश्नः—"इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इत्यत्र चकारः कर्तव्यो नवेति वद ।**

उत्तरम्—ननु 'चक्री + अत्र' अत्र "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इत्यनेन ह्रस्वे कृते "इको यणचि" इति यण् स्यादिति चेद् ? न । ह्रस्वविधानसामर्थ्यात् । अन्यथा प्रकृतसूत्रेण ह्रस्वविधेः वैयर्थ्यप्रसङ्गात् । एवञ्च प्रकृतिभावस्यान्यथासिद्धत्वात्तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् ।

**प्रश्नः—"अप्लुतवदुपस्थिते" इत्यत्र 'वत्' ग्रहणस्य किम्प्रयोजनम्।**

उत्तरम्—"अप्लुतवदुपस्थिते" इत्यत्र वद्ग्रहणं विहाय 'अप्लुत उपस्थिते" इत्युक्ते प्लुतस्य स्थाने अप्लुत एव विधीयेत । अतः प्लुत एव निवर्तेत । ततश्च 'अग्नी ति' इत्यत्र सम्बोधनप्रथमाद्विवचनान्तस्यानुकरणे प्रगृह्य ईकारः त्रिमात्रो न श्रूयेत । वत्करणे तु 'अग्नी इति' इत्यत्र "दूराद्धूते च" इति प्लुते, तस्यासिद्धत्वात् "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञायाम् "अप्लुतवदुपस्थिते" इति अप्लुतवद्भावेऽपि "प्लुतप्रगृह्या अचि नित्यम्" इति प्रगृह्याश्रये प्रकृतिभावे जाते प्लुतस्य श्रवणं भवति ।

**प्रश्नः—'मणीवोष्ट्रस्य' इत्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रकृतिभावस्य प्राप्तौ सत्यां 'सवर्णदीर्घः' कथं भवतीति प्रतिपादय।**

उत्तरम्—ननु "ईदूदेद् द्विवचनं प्रगृह्यम्" इति सूत्रेण ईकारान्तद्विवचनस्य प्रगृह्यसंज्ञा, ततोऽचि परे प्रकृतिभावश्च भवति यथा—'हरी + एतौ' इत्यादौ। एवं सति 'मणी + इव' इत्यत्रापि तेन प्रकृतिभावः स्यात्, सवर्णदीर्घः कथमिति चेदुच्यते। अत्र न इव शब्दः, किन्तु इवार्थो वशब्दो वाशब्दो वास्तीति सवर्णदीर्घस्यात्राभावात्।

**प्रश्नः—'रामकृष्णावमू आसाते' अत्र पुल्लिङ्गनिर्देशः किमर्थ इति सुष्ठूपपादय।**

उत्तरम—स्त्रीलिङ्गे नपुंसकलिङ्गे च "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रदृष्ट्या मुत्वस्यासिद्धत्वेन 'अदे' इति रूपे जाते, तत्र पूर्वसूत्रेण "ईदूदेद्" इत्यनेनैव प्रगृह्यसंज्ञा सिद्धा भवतीति "रामकृष्णौ" पदस्योच्चारणं पुँल्लिङ्गनिर्देशार्थम्। पुँल्लिङ्गे हि मुत्वस्यासिद्धत्वेन 'अदौ' इति रूपम्, तत्र पूर्वसूत्रेण सर्वथैव प्रकृतिभावासिद्धे मात्परस्योकारस्य प्रगृह्यसंज्ञाया इदमेवापूर्वं फलम्। अतः प्रकृते—'रामकृष्णावमू आसाते' इति निर्दिष्टम्।

**प्रश्नः—"अदसो मात्" इत्यस्मिन् सूत्रे माद्ग्रहणं किमर्थमिति वद।**

उत्तरम्—"अदसो मात्" इत्यत्र माद्ग्रहणाभावे "संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति परिभाषया "ईदूदेत०" इति सूत्रात् ईकारादीनां त्रयाणामनुवृत्तिः "अदसो मात्" इत्यत्र स्यात्। तेन 'अमुकेऽत्र' इत्यत्रापि प्रगृह्यसंज्ञा प्रकृतिभावश्च स्यात्। तन्निवारणार्थं प्रकृते माद्ग्रहणमावश्यकम्। माद्ग्रहणे कृते तु मकारात्परस्य एकारस्यासम्भवात् न तत्र प्रकृतिभावः।

**प्रश्नः—"इको यणचि" इत्यनन्तरमेव "मय उञो वा" इति पठितव्यम् वोग्रहणञ्च न कर्तव्यं, एवं कृते किं स्यादिति लिख।**

उत्तरम्—यदि षष्ठाध्यायस्य प्रथमे पादे "इको यणचि" इत्यनन्तरं मयः परस्य उञो यणादेशविकल्पो विधीयेत, तर्हि 'किम्वुक्तम्' इत्यत्र "मोऽनुस्वारः" इति मकारस्य वकारे परे अनुस्वारः स्यात्। त्रिपाद्यां वत्वविधौ तु तस्यासिद्धत्वान्नानुस्वारः। त्रिपाद्यामनुस्वारविध्यपेक्षया वत्वविधेः परत्वात्।

**प्रश्नः—"ईदूतौ च सप्तम्यर्थे" अत्र सूत्रे 'अर्थग्रहणं' किमर्थमिति**

सुष्ठु प्रतिपादय ।

उत्तरम्—ननु अर्थग्रहणाभावेऽपि ईदूदंशे सप्तमीविशेषणत्वेन; प्रत्ययांशे च तदादिविशेषणत्वेन तदन्तविधिद्वयेन ईदूदन्तं यत्सप्तम्यन्तं तत् प्रगृह्यसंज्ञकं स्यादित्यर्थे नैवेष्टसिद्धेरर्थग्रहणं व्यर्थमेव । न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति तदन्तविधिनिषेधेनोक्तार्थासम्भव इति वाच्यम् । 'ईदूतौ सप्तमी प्रगृह्यम्' अदसः' 'एच्च द्विवचनम्' इत्येव सूत्रयितव्ये गुरुभूतन्यासकरणसामर्थ्यात् । 'ययी' 'पपी' इत्यादौ पराद्विवद्भावेन सप्तमीत्वमादाय सूत्रसाफल्येऽपि ऊकारांशेऽसम्भवाच्च । इति चेत् ? न । अर्थग्रहणेन सप्तम्यर्थविशेष्यताकोपस्थितिजनकस्यैव ईकारान्तस्य ऊकारान्तस्य वा तत्संज्ञाबोधनात् । एवञ्च 'गौरी अधिश्रितः' 'तनू इति' इत्यत्र ईकारान्ते ऊकारान्ते च सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वस्य (सप्तम्यर्थनिरूपितशक्तिपर्याप्त्यधिकरणत्वस्य) सत्त्वेन प्रगृह्यसंज्ञासिद्धिः । 'वाप्यश्व' इत्यत्र समासघटकवापीशब्दस्य प्रत्ययलक्षणेन सप्तम्यन्तत्वेऽपि समासे समुदाये शक्तिस्वीकारेण सप्तम्यर्थविशेष्यताकोपस्थितिजनकत्वाभावेन न प्रगृह्यसंज्ञेति दिक् ।

इत्यच्सन्धिः ।

---

# अथ हल्सन्धिः ।

प्रश्नः—"न पदान्ताट्टोरनाम्" इत्यत्र टोः ग्रहणं किमर्थमित्युपपादय।

उत्तरम्—ननु "तोः षि" इति निर्देशेन "क्वचिदेकदेशोऽप्यनुवर्तते" इति परिभाषया "ष्टुना" इतिसूत्रात् टुमात्रस्यानुवृत्तौ पदान्ताट्टवर्गात्परस्य इत्याद्यर्थे नैवेष्टसिद्धेः टोः ग्रहणं व्यर्थमेव । तदेव व्यर्थं सत् उक्तपरिभाषाया अनित्यत्वं ज्ञापयति। एवञ्च टोर्ग्रहणाभावे "सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति परिभाषया,"ष्टुना ष्टुः" इत्यतः "न पदान्तात्" इत्यत्र ष्टोरनुवृत्त्या पदान्तात् षकारटवर्गात्परयोः स्तोः ष्टुर्न इत्यर्थेऽपि पदान्तषकारस्य जश्त्वेन डकारस्यैव सम्भवात् । ततः परस्य ष्टुत्वनिषेधस्येष्टत्वात् अतिप्रसङ्गाभावेन सूत्रे टोरितिव्यर्थमेवेति चेत् ? न । सर्पिष्टममित्यत्र "ह्रस्वात्तादौ तद्धिते" इत्यनेन विहितस्य षत्वस्यासिद्धत्वेन जश्त्वाप्रवृत्तौ पदान्तषकारादपि ष्टुत्वनिषेधापत्तेस्तद्वारणाय सूत्रे टोर्ग्रहणस्यावश्यकत्वात् ।

प्रश्नः—'चतुर्मुखः' इत्यत्र "यरोऽनुनासिके" इति मनुनासिकः

कुतो नेति दर्शय ?

उत्तरम्—ननु 'चतुर्मुखः' इत्यत्र "यरोऽनुनासिकेऽनुनासिको वा" इति सूत्रेण पदान्तस्य यरो—रेफस्य, अनुनासिके-मुखशब्दावयवमकारे परे अनुनासिकः मूर्धस्थानजन्यो णकारः कुतो नेति चेत् ? उच्यते—"स्थानेऽन्तरतम उरण्रपरः" इति संहितापाठे प्रथमान्तपाठस्वीकारे स्थानिनः स्थाने अन्तरतम एवादेशो भवतीति यथा नियमः, तथा भाष्यकृता "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठं स्वीकृत्य आदेशो अन्तरतमे स्थानिनि भवतीत्यर्थं व्याख्याय आदेशोऽपि अन्तरतमस्यैव स्थानिनः स्थाने भवतीति नियमः स्वीकृतः। एवञ्च स्थानप्रयत्नाभ्याम् अन्तरतमे स्पर्शे कादिमान्तवर्णे चरितार्थोऽयमनुनासिकविधिः केवलस्थानेन सदृशे रेफे न प्रवर्तते। नन्वेवं तर्हि क्वचित् प्रथमान्तपाठस्य क्वचित् सप्तम्यन्तपाठस्य स्वीकारे अर्धजरतीयापत्तेः दीर्घेकारादौ यणानापत्तेश्च, इति चेत् ? न। "अनुस्वारस्य ययि परसवर्णः" इति सूत्रात् सवर्णपदमाकृष्य प्रकृतसूत्रे संयोज्य पदान्तस्य यरोऽनुनासिके परे सवर्णानुनासिकः स्यादिति सूत्रार्थे 'रेफोष्मणां सवर्णा न सन्ति' इति भाष्येण रेफस्य सावर्ण्याभावात् णत्वाभाव इति समाधानात्।

प्रश्नः—'ककुद्मन्तः' इत्यत्र ककुद्शब्दात् मतुपि प्रत्यये परे "प्रत्यये भाषायां नित्यम्" इति नित्यानुनासिकेन भाव्यम् ? तदभावश्चात्र कथमिति स्पष्टं प्रतिपादय।

उत्तरम्—"मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति यवादिगणे प्रकृतिप्रत्ययस्य पाठात् अनुनासिकाभावः। वस्तुतस्तु "य चिभं तसौ मत्वर्थे" इति संहितापाठे तकारात्प्राक् चर्त्वेन दकारप्रश्लेषात् भत्वेन पदत्वाभावादनुनासिकस्य न प्राप्तिः। पदान्तस्यैव यरः तेनानुनासिकत्वविधानादित्यलम्।

प्रश्नः—"मोऽनुस्वारः" इत्यत्र "पदस्य" इत्यनुवर्तनफलं लिख।

उत्तरम्—ननु "नश्चापदान्तस्य झलि" इति सूत्रे मकाराकर्षणार्थकचकारेण अपदान्तस्य मस्य अनुस्वारश्चेत्तर्हि झल्येवेति नियमादेव 'गम्यते' इत्यत्र अनुस्वारो न भविष्यतीति चेत् ? न। झलि परतः अनुस्वारश्चेत्तर्हि अपदान्तस्यैव मस्य इति विपरीतनियमेन 'हरिं वन्दे' इति मूके एव अनुस्वारानापत्तेः। एवं च "हलि च पदे" इत्यतः पदानुवृत्तिः कार्येति दिक्।

प्रश्नः— 'कुर्वन्ति' इत्यत्र "रषाभ्यां नो णः समानपदे" इति णत्वं

कुतो नेति प्रतिपादय ।

उत्तरम्—'कृञो लटि, तत्स्थाने झौ "तनादिकृञ्भ्य उः" इत्यनेन उप्रत्यये "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "अत उत् सार्वधातुके" इत्यनेन उदादेशे "झोऽन्तः" इत्यनेन झेरन्तादेशे यणादेशे च कृते 'कुर्वन्ति' इति सिध्यति ।

ननु 'कुर्वन्ति' इत्यत्र "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन रेफात् अड्व्यवहितनकारस्य सत्वेन णत्वं स्यादिति चेत् ? उच्यते—'कुर्वन्ति' इत्यत्र "अट्कुप्वाङ्नुम्" इति णत्वे प्राप्ते तस्यासिद्धत्वात् "नश्चापदान्तस्य झलि" इति नकारस्यानुस्वारादेशे "अनुस्वारस्य ययि परसवर्णः" इति सूत्रेण तस्य परसवर्णेन नकारादेशे परसवर्णस्य णत्वदृष्ट्या असिद्धत्वात् न णत्वप्रवृत्तिः ।

**प्रश्नः—'पुंख्यानम्' इत्यत्र "पुमः खय्यम्परे" इति रुः कथं न 'ख्याञादेशे न' इति अपूर्वं वार्तिकं न वेति च दर्शय ।**

उत्तरम्—ननु चक्षिङो ल्युटि "खशादिरयमादेशः" इति प्रकृतसूत्रस्थभाष्यात् "चक्षिङः ख्याञ्" इति सूत्रेण खशाञादेशे "शस्य यो वा" इत्यनेन शस्य यत्वे।तस्यासिद्धप्रकरणस्थणत्वविधायकशास्त्रानन्तरपाठेन "पुमः खय्यम्परे" इत्येतद्दृष्ट्या असिद्धत्वात् अम्परकत्वाभावेन "पुमः खय्यम्परे" इत्यस्याप्राप्त्या न रुत्वम् । इत्यतन्मूलकमेव "ख्याञादेशे न" इति वचनं नापूर्वमिति दिक् ।

**प्रश्नः—"कुप्वोः ≍क≍पौ च" इदं शास्त्रं "विसर्जनीयस्य सः" इत्यस्यैव बाधकम्, न तु "शर्परे विसर्जनीयः" इत्यस्य इति कथमुक्तम्, तत् प्रतिपादय ।**

उत्तरम्—"येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इति हि न्यायस्वरूपम् । तथाहि—यत्कर्तृकावश्यप्राप्तौ सत्यां यो विधिरारभ्यते; स तस्य बाधको भवतीत्यर्थः । यत्र यत्र "कस्कादिषु च" इत्यस्य प्रवृत्तिः, तत्र तत्र "कुप्वोः ≍क≍पौ च" इत्यस्य प्राप्तिरिति "कुप्वोः ≍क≍पौ च" इति शास्त्रकर्तृकावश्यप्राप्तौ सत्यां "कस्कादिषु च" इत्यस्य आरम्भ इति, "कस्कादिषु च" इति ≍क≍ पयोर्बाधकं भवति । सकललक्ष्यप्राप्तसूत्रस्यैवापवादो भवतीत्यर्थः ।

एवं च "विसर्जनीयस्य सः" इत्यस्य सकललक्ष्येषु प्राप्तिसत्वे कुप्वोरित्यस्यारम्भो न तु "शर्परे" इत्यस्य सर्वत्र प्राप्तिरिति "कुप्वोः"सूत्रं सकललक्ष्यप्राप्तविसर्जनीयस्येति सूत्रस्यैव बाधकम्, नतु क्वचित्प्राप्तिविषय-"शर्परे विसर्जनीय"

इत्यस्य, एवञ्च 'वासः क्षौमम्' इत्यादौ "शर्परे" इत्येव परत्वात् बाधकमिति दिक्।

**प्रश्नः—'चेच्छिद्यते' इत्यत्र "दीर्घात्" इति पञ्चमीनिर्देशेन "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति न्यायेन छस्य तुक् कुतो नेति प्रतिपादय।**

**उत्तरम्**—ननु "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति परिभाषया "तस्मिन्" इत्यतः "तस्मादित्युत्तरस्य" इत्यस्य प्राबल्यबोधनात् तदुपस्थितया "दीर्घात्" इति पञ्चम्या छेइतिसप्तम्याः षष्ठीप्रकल्पनेन दीर्घात्परिभूतस्य छस्य तुगित्यर्थे छस्य तुगागमे छकारोपरि चकारश्रवणापत्तिर्दुर्वारेति चेद्? न। "सेनासुराच्छाया" इति सूत्रनिर्देशात् "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति परिभाषां बाधित्वा दीर्घादितिषष्ठ्यर्थे पञ्चमीकल्पनेन दीर्घस्यैवायं तुक्, न तु छस्य इत्याशयात्।

इति हल्सन्धिप्रकरणम्।

## अथ विसर्गसन्धिप्रकरणम्।

**प्रश्नः—'मातुः कृपा' इत्यत्र "इदुदुपधस्य चाप्रत्ययस्य" इत्यनेन विसर्गस्य षत्वं कुतो नेति प्रतिपादय।**

**उत्तरम्**—"इदुदुपधस्य चाप्रत्ययस्य" इति सूत्रेण 'भ्रातुष्पुत्रः' इत्यत्रापि षत्वसिद्धौ भ्रातुष्पुत्रशब्दस्य पाठो कस्कादिषु विफलः, स एव व्यर्थः सञ्ज्ञापयति—'एकादेशशास्त्रनिमित्तकस्य न षत्वम्' इति, तेन 'मातुः कृपा' इत्यत्र एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्य न षत्वम्। न च "षत्वतुकोरसिद्धः" इति सूत्रेण एकादेशशास्त्रस्यासिद्धत्वात् कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठः सफल इति वाच्यम्? पदान्तपदाद्योरेवैकादेशशास्त्रस्य असिद्धत्वमेव तत्र स्वीकारात्।

**प्रश्नः—"द्विस्त्रिश्चतुरिति कृत्वोऽर्थे" अत्र कृत्वार्थे इति ग्रहणं किमर्थमिति प्रतिपादय।**

**उत्तरम्**—"सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्" इति परिभाषया सुजन्ताभ्यां द्वित्रिशब्दाभ्यां साहचर्यात् सुजन्तस्यैव चतुःशब्दस्यापि ग्रहणं भविष्यतीति 'चतुष्कपाल' इत्यत्र सुजन्तत्वाभावात् विकल्पषत्वाप्राप्तौ कृत्वोर्थग्रहणं व्यर्थम्। तदेव व्यर्थं सत् साहचर्यं सर्वत्र न नियामकमिति बोधयति। तेन

"दीधीवेवीटाम्" इति सूत्रे दीधीवेवीतिधातुद्वयसाहचर्येऽपि इट्गताविति धातोर्न ग्रहणम्, किन्तु आगमस्यैव इटो ग्रहणं भवतीति फलमित्यलम्।

**प्रश्नः—'सर्पिष्कुण्डिका' इत्यत्र "नित्यं समासेऽनुत्तरपदस्थस्य" इति "इसुसोः सामर्थ्ये" इति वा विसर्गस्य षत्वसिद्धे कस्कादिगणे तस्य पाठः किमर्थः तदुपपादय।**

**उत्तरम्**—'नित्यं समासेऽनुत्तरपदस्थस्य' इत्यनेन समासे एव षत्वं विधीयते, यथा-सर्पिषः कुण्डिका सर्पिष्कुण्डिका इत्यत्र। "इसुसोः सामर्थ्ये" इत्यनेन तु व्यपेक्षारूपसामर्थ्ये एव षत्वं विधीयते 'सर्पिष्करोति' इत्यादौ। यदा तु तिष्ठतु सर्पिः कुण्डिकामानय इति प्रयोगः, तत्र सर्पिष्कुण्डिकामिति षत्ववद्घटितम् यथा स्यादित्येतदर्थं कस्कादिगणे पाठः। अपरं च व्यपेक्षायां "इसुसोः सामर्थ्ये" इति विकल्पेन षत्वं भवति, कस्कादिगणे पाठेन व्यपेक्षायामपि सर्पिष्कुण्डिकायामित्येकमेव स्यादिति तदर्थमपि कस्कादिगणे तस्य पाठः इत्यलम्।

इति विसर्गसन्धिप्रकरणम्।

---

## अथ स्वादिसन्धिप्रकरणम्।

**प्रश्नः—"अतो रोरप्लुतादप्लुते" इत्यत्र अप्लुतादिति किमर्थमिति तदुपपादय।**

**उत्तरम्**—"अतो रोरप्लुतादप्लुते" इत्यत्र अप्लुतादित्यस्याभावे "एहि सुस्रोत३ अत्र स्नाहि" इति वाक्ये पूर्ववाक्यस्य टेः "दूराद्धूते च" इत्यनेन प्लुतविधानात् पदान्तस्य रोः प्लुतात्परत्वेन तत्रोत्वं मा भूत् इति सूत्रे अप्लुतादिति पदम्। नचात्र अप्लुतादितिविशेषणाभावेऽपि अत इति तपरकरणेन ह्रस्वाकार एव गृह्यते इति नात्रोत्वं स्यादिति वाच्यम्? प्लुतस्यासिद्धत्वेन अतः परत्वात्। अप्लुतादिति कृते तु तत्सामर्थ्यान्नासिद्धत्वम्। यदि प्लुतोऽसिद्धः स्यात्तदा सर्वत्रैव अप्लुताकार एव उपलभ्येत; अप्लुतादिति विशेषणन्तु व्यर्थमेव स्यात्। तपरकरणं तु दीर्घाकारात्परस्य रुत्वस्य उत्ववारणेन चरितार्थमिति तपरकरणसामर्थ्यान्नात्रोत्वमिति वक्तुमशक्यमित्यलम्।

**प्रश्नः—"भोभगोअघोअपूर्वस्य योऽशि" इत्यत्र अशिग्रहणं किमर्थम्? तदुपपादय।**

उत्तरम्—ननु "भोभगो" इत्यत्र अश्ग्रहणाभावेऽपि 'देवास्+सन्ति' इत्यत्र "ससजुषो रुः" इति रुत्वे "भोभगो" इति यत्वे कृते तस्य पूर्वत्रासिद्धो-यत्वेनासिद्धत्वात् "खरवसानयोर्विसर्जनीयः" इति विसर्गे सति 'देवाः+सन्ति' इति सिध्यतीति चेद् ? न। विसर्गे जातेऽपि विसर्गस्य "स्थानिवदादेशोऽनल्विधौ" इति स्थानिवद्भावेन रुत्वातिदेशे पुनरपि यत्वापत्तेः। कृते चाश्ग्रहणे सकारस्याश्त्वाभावान्न यत्वमिति। नच "अनल्विधौ" इति स्थानिवद्भावनिषेध इति वाच्यम्। रोरिति समुदायरूपाश्रयणेनादोषात्।

प्रश्नः—"उञि च पदे" इत्यस्मिन् सूत्रे पदे ग्रहणं किमर्थं तदुपादय।

उत्तरम्—पदे इत्यस्याग्रहणे 'तन्त्रय्—उतम्' इति स्थितौ उञ्परत्वात् यलोपापत्तिः, तद्वारणाय पदे ग्रहणमावश्यकम्। सति च तस्मिन् उञ्परत्वेऽपि तस्य पदत्वाभावान्न तदापत्तिः। न च "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया चादिपठितप्रतिपदोक्तस्यैवात्र सूत्रे उञो ग्रहणेन सम्प्रसारणनिष्पन्नस्य लाक्षणिकस्य तस्याग्रहणात् तत्रत्योक्तदोषव्यावृत्तौ सत्यां व्यर्थमेव पदेग्रहणमिति वाच्यम्। उत्तरार्थत्वेन तस्य चारितार्थ्यात्।

प्रश्नः—"ढ्लोपे पूर्वस्य दीर्घोऽणः" अत्र सूत्रे पूर्वस्येति ग्रहणं किमर्थम् ? तदुपपादय।

उत्तरम्—ननु "ढ्लोपे पूर्वस्य" इत्यस्मिन् सूत्रे ढ्लोपे इति सप्तमी निर्देशात् "तस्मिन्" इति परिभाषया पूर्वांशोपस्थितत्या 'पुना रमते' इत्यादौ पूर्वस्यैव दीर्घो भविष्यतीति किं पूर्वग्रहणेनेति चेद् ? न। पूर्वग्रहणाभावे हि "अलुगुत्तरपदे" इति सूत्रादुत्तरपदानुवृत्त्या 'नीरक्तम्' 'दूरक्तम्' इत्यादिसमासस्थले एव दीर्घो भविष्यतीति 'लीढः, अजर्घाः' इत्यादौ दीर्घासिद्धेः। तस्मात् पूर्वग्रहणं कर्तव्यमेव। कृते हि तस्मिन् तत्सामर्थ्यात् उत्तरपदानुवृत्तौ समासेऽसमासे च सर्वत्रैव दीर्घः सिध्यतीति दिक्।

इति स्वादिसन्धिप्रकरणम्।

---

## अथाजन्तपुँल्लिङ्गप्रकरणम्।

प्रश्नः—"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यनेनैव प्रातिपदिकसञ्ज्ञासिद्धौ समासग्रहणं किमर्थम् ? तदुपपादय।

उत्तरम्—"प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया 'राजन् + ङस्' 'पुरुष + सु' इति समुदायघटक राजन् ङस् इत्यस्य पुरुष सु इत्यस्य च प्रत्ययान्ततदादित्वेऽपि राजन् ङस् पुरुष सु, इति समुदायस्य प्रत्ययान्ततदादिभिन्नत्वात् "अर्थवत्" इति सूत्रेणैव प्रातिपदिकसञ्ज्ञासिद्धौ समासग्रहणं व्यर्थं सत् यत्र समुदाये पूर्वो भागः पदं तस्य समुदायस्य प्रातिपदिकसञ्ज्ञा चेत् तर्हि समासस्यैवेति नियमयति। तेन 'ग्रामानय' इति वाक्यस्य प्रातिपदिकसञ्ज्ञा न भवतीति फलम् । नच 'जन्मवान्' इत्यत्रापि पूर्वभागस्य पदत्वेन प्रातिपदिकसञ्ज्ञा न स्यादिति वाच्यम् ? उत्तरस्तु प्रत्ययो न इति निवेशात् । न चैवमर्थस्वीकारेऽपि 'अयम् इयान्' इत्यादौ दोष इति वाच्यम् ? 'उत्तरस्तु तत्प्रकृतिकप्रत्ययो न' इति निवेशेनादोषात् ।

प्रश्नः—"प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इत्येव सिद्धे "ङ्याप्प्रातिपदिकात्" इत्यत्र ङ्याप्ग्रहणं किमर्थम् ? तद् सम्यगुपपादय ।

उत्तरम्—रमा गौरी इत्यादौ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया प्रातिपदिकधर्मस्यानयनेन प्रातिपदिकादित्यनेनैवेष्टसिद्धौ ङ्याप्ग्रहणं व्यर्थं सत् ङ्याबन्तादेव तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ् मा भूदित्येतदर्थं बोधयति । अन्यथा 'स्वार्थ-द्रव्य लिङ्ग-सङ्ख्या-कारकाणां क्रमशः स्वीकारः, इति न्यायेन आर्यशब्दात् पूर्वं स्वार्थिकत्वेन कप्रत्यये ततष्टापि आकारस्थानिकाकारस्याभावेन "उदीचामातः स्थाने" इत्यस्याप्रवृत्तौ "प्रत्ययस्थात्कात्" इत्यनेनैव नित्यमित्वे "आर्यिका" इत्येकमेव रूपं स्यात् । कृते हि ङ्याप्ग्रहणे तत्सामर्थ्यात् पूर्वं टापि ततः कप्रत्यये "केऽणः" इति ह्रस्वे आकारस्थानिकाकारस्य सत्वेन "उदीचामातः स्थाने यकपूर्वायाः" इति सूत्रेण वैकल्पिकेत्वेन 'आर्यका' 'आर्यिका' इति रूपद्वयं सिध्यति । रक्तवर्णस्त्रीवाचकलोहितशब्दात् "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीपः प्राक् कन्प्रत्ययस्य अन्तरङ्गस्य च प्राप्तावुक्तरीत्या प्रथमं ङीपि तत्सन्नियोगेन नत्वे च ततः कनि ह्रस्वे 'लोहिनिका' इति, वैकल्पिकङीप्नत्वाभावे तु 'लोहितिका' इति भवतीति फलम् । अन्यथा स्वार्थिककनि 'लोहितिका' इति एकमेव रूपं स्यात् ।

प्रश्नः— राम अस् इत्यत्र "प्रथमयोः पूर्वसवर्णः" इति शास्त्रम्

**"अतो गुणे" इत्यनेन अपवादत्वात् कथं न बाध्यते तत् प्रतिपादय ।**

उत्तरम्—राम + अस् इति स्थिते "अकः सवर्णे दीर्घः" इत्यनेन सवर्णदीर्घः प्राप्तः "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घश्च प्राप्तः "अतो गुणे" इत्यनेन पररूपं च प्राप्तम् इति, यत्र यत्र अपदान्तादकारादग्रे ह्रस्वाकारः तत्र तत्र सर्वत्र सवर्णदीर्घस्य क्वचिच्च प्रथमाद्वितीयास्थले पूर्वसवर्णदीर्घस्य च प्राप्तिरिति पररूपस्य निरवकाशस्य सकललक्ष्यप्राप्तसवर्णदीर्घस्य बाधकत्वम् । सवर्णदीर्घबाधेन चारितार्थ्ये पूर्वसवर्णदीर्घस्य बाधे निरवकाशत्वरूपबाधबीजस्याभावेन न पूर्वसवर्णदीर्घस्य बाधकत्वम् । किन्तु पूर्वसवर्णदीर्घस्यैव परत्वेन प्राबल्यात्प्रवृत्तिरिति । एवं हि अष्टाध्यायां पाठः-"अतो गुणे" "अकः सवर्णे दीर्घः" "प्रथमयोः पूर्वसवर्णः" इति अपवादशास्त्रस्य प्राथम्यम्, बाध्यशास्त्रस्य च अनन्तरोत्तरत्वम्, इति पुरस्तादपवादाः-प्राग्वर्तिनो अपवादाः, अनन्तरान्-सन्निकृष्टान्, विधीन् बाधन्ते नोत्तरान् अनन्तरापेक्षया व्यवहितानिति तदर्थः । तथाच "अतो गुणे" इति सूत्रं सवर्णदीर्घमेव बाधते, नतु पूर्वसवर्णदीर्घमिति न दोष इति दिक् ।

**प्रश्नः—सम्बुध्याक्षिप्तस्याङ्गस्य एङ्ह्रस्वाभ्यां विशेषणान्नेह हे कतरत् कुलेति इयं फक्किका युक्तियुक्तमुपपादनीया ।**

उत्तरम्—'येन विना यदनुपन्नं तत्तेनाक्षिप्यते' इति न्यायात् अङ्गस्याक्षेपः क्रियते । 'येन यदाक्षिप्यते तत्तेनान्वेति' इति नियमानुसारेण सम्बुध्याक्षिप्तस्य अङ्गपदस्य सम्बुद्धिपदेनैव अन्वयस्योचितत्वेन अङ्गात्परा या सम्बुद्धिः तदवयवो हल् लुप्यते, स च हल् एङ्ह्रस्वाभ्यां परिभूतश्चेत् इत्यर्थाङ्गीकारे'हे कतरत्'इत्यत्र तकारस्य लोपापत्तिः, तद्वारणाय अङ्गात्परा या सम्बुद्धिः तदवयवो हल् लुप्यते, सा च सम्बुद्धिरेङ्ह्रस्वाभ्यां परिभूतश्चेदित्यर्थाङ्गीकारे हे कुल इत्यत्र एकदेशविकृतन्यायेन लान्तभागस्याङ्गत्वे परादिवद्भावेन सम्बुद्धित्वे जाते सति ह्रस्वात्परासम्बुद्धिर्नास्ति इति मलोपो न स्यादिति क्वचिदन्येनाक्षिप्तस्य पदार्थस्य अन्यत्राम्वयो भवति । तेन सम्बुध्याक्षिप्तस्याङ्गस्य एङ्ह्रस्वाभ्यां विशेषणात् तदन्तविधौ एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेद् इत्यर्थः सम्पन्नः । तथाच-प्रकृते कतरदित्यत्र यदङ्गं तन्न ह्रस्वान्तं, यद् ह्रस्वान्तं तन्नाङ्गमिति कतरदित्यत्र ह्रस्वान्ताङ्गस्याभावेन न तलोपापत्तिः । कुलमित्यत्र पूर्वान्तवद्भावेन अङ्गमानीय ह्रस्वान्ताङ्गात्परस्य सम्बुद्ध्यवयवस्य मस्य लोपे 'हे कुल' इत्यस्य सिद्धिः ।

प्रश्नः—"एङ्ह्रस्वात् सम्बुद्धेः" इति सूत्रे एङ्ग्रहणं किमर्थमिति दर्शय ।

उत्तरम्—ननु "एङ्ह्रस्वात् सम्बुद्धेः" इति सूत्रे एङ्ग्रहणाभावे हरिशब्दात् विष्णुशब्दाद्वा सम्बुद्धिसंज्ञकसुप्रत्यये ह्रस्वात्परत्वेनैव सुलोपे, ततः प्रत्ययलक्षणेन "ह्रस्वस्य गुणः" इति गुणे 'हे हरे, हे विष्णो' इति सिद्धावेङ्ग्रहणं व्यर्थमिति चेद् ? न । ह्रस्वात् परत्वेन सुलोपस्य प्राप्तावपि परत्वेन नित्यतया च "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इति परिभाषानुसारेण "ह्रस्वस्य गुणः" इत्यस्य प्राबल्येन गुणे जाते ह्रस्वात्परत्वं नास्तीति सुलोपाऽप्रवृत्तौ, तदर्थमेङ्ग्रहणस्यावश्यकत्वात् ।

प्रश्नः—"यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इत्यत्र विधिग्रहणं किमर्थम् ?

उत्तरम्—इदम्शब्दाद्वतुपि "किमिदम्भ्यां वो घः" इति वस्य स्थाने घादेशे "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति घस्य स्थाने इयादेशे इयदिति जाते "इदं किमोरीश्की" इति इदमः ईशादेशे तस्य "यस्येति च" इति लोपे "उगितश्च" इति ङीपि इयतीति सिद्धम् । तस्य स्त्रीशब्दसमभिव्याहारे 'स्त्री + इयती' इत्यवस्थायां विधिग्रहणाभावे यस्मात्प्रत्ययः परस्तस्मिन्तदङ्गसंज्ञमित्यर्थे इयत्प्रत्ययस्य स्त्रीशब्दात्परत्वेन तस्मिन् स्त्रीशब्दस्याङ्गसंज्ञायां "स्त्रियाः" इत्यनेनेयङापत्तिः । तदर्थं विधिग्रहणं कर्तव्यमेव । कृते विधिग्रहणे इयत्प्रत्यये परे स्त्रीशब्दस्य नाङ्गत्वम् । स्त्रीशब्दात् इयतोऽविधानादिति दिक् ।

प्रश्नः—"यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्" इत्यत्र 'प्रत्यये' इति किमर्थम् ।

उत्तरम्—प्रत्ययग्रहणाभावे 'देवदत्त ओदनमपाक्षीत्' इत्यत्र देवदत्तोत्तरवर्तिसुप्रत्ययमवलम्ब्य देवदत्त ओदनमपाक्षीदिति समुदायस्याङ्गसंज्ञायां देवदत्तात्पूर्वमपि अडागमापत्तिरिति प्रत्यये इति पदं कर्तव्यम् । कृते च प्रत्ययग्रहणे सुप्रत्यये परतः देवदत्तस्यैवाङ्गसंज्ञा भवतीति दिक् ।

प्रश्नः—'रामाय' इत्यत्र सन्निपातपरिभाषा कथं प्रवर्तते, तस्या निवारणञ्च कया रीत्या भवतीति सुष्ठूपपादय ।

उत्तरम्—रामशब्दात् ङेविभक्तौ "ङेर्यः" इति सूत्रेणादन्तादङ्गात् परत्वेन

ङे इत्यस्य स्थाने यादेशे "स्थानिवदादेशोऽनल्विधौ" इति स्थानिवद्भावेन यादेशे 'ङे' वृत्तिसुपस्त्यातिदेशेन "सुपि च" इत्यनेन दीर्घे 'रामाय' इति सिद्धयति । ननु अदन्ताङ्गं निमित्तीकृत्य जायमानो यादेशोऽदन्ताङ्गविघातकदीर्घप्रवृत्तिं प्रति निमित्तं नेति "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषया निमित्तत्व-निषेधे कथं दीर्घप्रवृत्तिरिति चेद् ? न । "कष्टाय क्रमणे" इत्यत्र सूत्रकारकृतदीर्घनिर्देशेन सन्निपातपरिभाषाया अनित्यत्वज्ञापनेन तस्या यादेशनिमित्तक"सुपि च" इति दीर्घविषयेऽप्रवृत्तेः ।

**प्रश्नः—"बहुवचने झल्येत्" इति सूत्रे बहुवचने इति ग्रहणं किमर्थं तदुपपादय ।**

**उत्तरम्—**"बहुवचने झल्येद्" इति सूत्रे बहुवचनग्रहणाभावे झलादौ सुपि अदन्ताङ्गस्य एत्वं भवति इत्यर्थे 'राम+स्' इत्यत्र रामस्य इत्यत्र च झलादि सुप्-परत्वेन रामइत्यदन्ताङ्गस्यैत्वं स्यात् । अतः सूत्रे बहुवचनग्रहणमावश्यकम् । न च सर्वत्र एकमेव प्रत्युदाहरणं दृश्यते, अत्र प्रत्युदाहरणद्वयं किमर्थमिति वाच्यम् । "स्वौजसमौट्" इत्यत्र "वौजसमौट्" इति न्यासकरणेन रामशब्दात् सुप्रत्यये तस्य झलदित्वाभावेन रामः इत्यत्र एत्वाप्राप्त्या रामस्य इति द्वितीयोदाहरणस्य आवश्यकत्वमित्याशयात् ।

**प्रश्नः—"बहुवचने झल्येद्" इत्यत्र झलि ग्रहणं किमर्थं तदुपपादय ।**

**उत्तरम्—**"अतो वृद्धिर्लुकि हलि" इति सूत्रात् हलि इति पदमनुवर्त्य रामाणामित्यत्र हल्परत्वेऽपि सन्निपातपरिभाषया एत्वं न स्यादिति झल्ग्रहणं व्यर्थमेव । तदेव व्यर्थं सत् एतद् कर्तव्ये सन्निपातपरिभाषा न प्रवर्तते इति ज्ञापयति । एवं च झल्ग्रहणाभावे रामाणामित्यत्र एत्वं स्यादेवेति स्वांशे झल्ग्रहणं चरितार्थम् । फलञ्च सर्वेषामित्यत्र एत्वसिद्धिः । अन्यथा अदन्तसन्निपातेन जायमानः सुट् अदन्तस्य विघातको न स्यादिति दिक् ।

**प्रश्नः—रामाणामित्यत्र परत्वात् "सुपि च" इति दीर्घः कुतो न, "नामि" इत्यनेन सन्निपातपरिभाषा कथं बाध्यते तदुपपादय ।**

**उत्तरम्—**नन्वत्र 'राम+नाम्' इति स्थिते "नामि" इत्यस्य हरीणामित्यादौ चरितार्थेन "सुपि च" इत्यस्य रामाय इत्यादौ चरितार्थेन च तुल्यबलविरोधिना "सुपि च" इत्यनेन "विप्रतिषेधे परं कार्यम्" इति शास्त्रबलात् दीर्घः स्यात्,

न "नामि" इत्यनेन, इति चेद् ? न । "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषया ह्रस्वान्तमङ्गं निमित्तीकृत्य जायमानस्य नुटो ह्रस्वान्ताङ्गविघातकदीर्घप्रवृत्तिं प्रति अनिमित्तत्वबोधनेन यञादित्वधर्मपुरस्कारेण प्रवर्तमानस्य "सुपि च" इति शास्त्रस्याप्राप्तेः। "नामि" इति तु आरम्भसामर्थ्याद् परिभाषां बाधते इत्यलम् ।

**प्रश्नः—"सर्वादीनि सर्वनामानि" इति सर्वनामसञ्ज्ञा तदन्तस्य स्यान्न वा, स्याच्चेत् तत्र ज्ञापकं किम् ? तदुपपादय ।**

**उत्तरम्**—"सर्वादीनि सर्वनामानि" इति सूत्रे सर्वादीनीति पदस्य शब्दस्वरूपमिति विशेष्यमादाय "द्वन्द्वे च" इति सूत्रेण विशेषत्वबोधनेन "येन विधिस्तदन्तस्य" इति सूत्रसहाय्येन सर्वादीनां सर्वाद्यन्तशब्दस्वरूपाणां च सर्वनामसञ्ज्ञा भवतीति सूत्रार्थः । एवं च सर्वशब्दस्य यथा सर्वनामसञ्ज्ञा तथा परमसर्वइत्यस्यापि । तेन परमसर्वशब्दात् अल् सिध्यति । एवं सर्वादिगणपठितभवत् शब्दान्तस्य सर्वनामसञ्ज्ञायाम् अकचि परमभवकानिति च सिद्धम् । तदन्तविध्यभावे 'वर्णाश्रमेतरा' इत्यस्य सर्वादिघटकत्वाभावेनैव सर्वनामसञ्ज्ञाया अप्राप्तौ तन्निषेधक "द्वन्द्वे च" इति सूत्रं व्यर्थमेव स्यात्, तदेव व्यर्थं सत् तदन्तस्यापीयं सञ्ज्ञा इत्यर्थं ज्ञापयतीति दिक् ।

**प्रश्नः—'सर्वे' इति रूपं शङ्कानिरासपूर्वकं साधय ।**

**उत्तरम्**—सर्वशब्दस्य "सर्वादीनि सर्वनामानि" इति सर्वनामसञ्ज्ञायां तस्माज्जसि तत्स्थाने "जसः शी" इत्यनेन विधीयमानः शी आदेशः शित्वादनेकाल्त्वाद् वा सर्वस्य स्थाने स्यादिति शङ्कायाम् अनेकाल्त्वादेव सर्वादेशो न तु शित्वादित्युच्यते । ननु यथा "अर्वणस्त्रसावनञः" इति सूत्रेण "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषया नकारस्यैव आदेशो भवति, तथैवात्रापि शकारस्येत्सञ्ज्ञायामुक्तपरिभाषया अनेकाल्त्वाभावेन शित्वात्सर्वादेशः स्यादिति चेद् ? न । सति सर्वादेशे स्थानिवद्भावेन प्रत्ययत्वमादाय इत्सञ्ज्ञायाः प्रवृत्तेः । यावत्सम्पूर्णस्य स्थाने आदेशो न भवति, तावत् प्रत्ययत्वाभावेन इत्सञ्ज्ञैव न स्यादित्यलम् ।

**प्रश्नः—उभशब्दस्य सर्वादिगणे पाठः किमर्थः तदुपपादय ।**

**उत्तरम्**—ननु सर्वादिगणे उभशब्दस्य पाठो व्यर्थः । सर्वनामकार्याणां स्मायादीनां द्विवचने अभावात् । न च "सर्वनाम्नः तृतीया च" इति सूत्रेण उभाभ्यां

हेतुभ्याम्, उभयोर्हेत्वोः इति षष्ठीतृतीया सिद्धिस्तत्फलमिति वाच्यम् । "निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्" इति वार्तिकेनैव गतार्थत्वात् । न च वृत्तिकृता "सर्वनाम्नस्तृतीया च" इति सूत्रे पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिज्ञापकं नान्यस्येति वाच्यम् । भाष्ये-"हेतौ" इति सूत्रे तद्वार्तिकस्य पठितत्वात् । अत एव अन्नेन कारणेन वसति, अन्नस्य कारणस्य इत्युदाहृतं हरदत्तेनेति चेद् , न । तस्येह सर्वादिगणे पाठस्तु 'उभकौ' इति अकजर्थत्वात् । ननु कप्रत्ययेनापि तत्सिद्धेः किमनेनाकजर्थपाठेन । न च काकचोः स्वरे विशेषोऽस्तीति वाच्यम् । प्रत्ययस्वरेण चित्स्वरेण वा अन्तोदात्तत्वे विशेषाभावात् , इति चेद् , न । द्विवचनपरत्वाभावेन उभयतः उभयत्र इत्यादाविव अयच्प्रसङ्गादित्यलम् ।

**प्रश्नः—सर्वादिगणे 'डतरडतम' इतिप्रत्यययोः पाठः किमर्थः । तदन्तयोर्ग्रहणे सञ्ज्ञाविधौ तदन्तविधिः कथमित्युपपादय ।**

**उत्तरम्**—सर्वादिगणे डतरडतमइतिप्रत्यययोर्ग्रहणेन केवलस्य च प्रत्ययस्य प्रयोगाभावे 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति तदन्तविधौ डतरप्रत्ययान्तडतमप्रत्ययान्तयोः कतरकतमादिशब्दयोरेव सर्वनामसञ्ज्ञा, नतु केवलयोस्तयोः । न च 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' "सुप्तिङन्तम्" इत्यन्तग्रहणाज्ज्ञापकात्, तेन तदन्तयोर्ग्रहणं न स्यादिति वाच्यम् । केवलयोः सञ्ज्ञायाः प्रयोजनाभावात् ।

**प्रश्नः—"पूर्वपराऽवरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम्" इत्यत्र व्यवस्थायामित्यस्य कोऽर्थः तस्य प्रयोजनं च किमिति सुष्टूपपादय ।**

**उत्तरम्**—स्वाभिधेयापेक्षावधिनियमो व्यवस्था, तस्य हि अयमर्थः—स्वस्य पूर्वादिशब्दस्य अभिधेयेन—वाच्यार्थेन नियमेनावधिरपेक्षते तादृशो नियमो व्यवस्था तद्वाचिपूर्वादिशब्दानां सर्वनामसञ्ज्ञा भवतीति सूत्रार्थः । पूर्वादिशब्दे उच्चारिते कस्मात् पूर्वः कस्मात् परः इत्यादिनियमेनावधिसापेक्षोऽर्थ इति यावत् । "पूर्वपरावर" इति सूत्रे व्यवस्थापदाभावे कुशलवाचिदक्षिणशब्दस्यापि सर्वनामसञ्ज्ञा स्यात्, सा माभूदिति तत्र व्यवस्थाग्रहणम् । कृते तु तस्मिन् कुशलार्थस्य कस्मात् कुशलः इति कदाचित् अवध्यपेक्षत्वेऽपि कुशलमात्रप्रतिपादनेच्छोच्चरितदक्षिणशब्दार्थस्य अवध्यपेक्षत्वाभावेन नियमेनावधिसापेक्षार्थकत्वाभावात् सर्वनामसञ्ज्ञा न भवतीति 'दक्षिणाः' इति एकमेव रूपम् । यदि च इह अमुक-

स्मात् कुशलः इति अवध्यन्वयसम्भवेन अस्तीह व्यवस्था, तदा 'अधरे ताम्बूल-रागः, उत्तरे प्रत्युत्तरे च शक्ता, इति प्रत्युदाहरणम् ।

**प्रश्नः—"न बहुव्रीहौ" इत्यस्मिन् सूत्रे नव्यप्राचीनयोः मतभेदः कः ? इदं सूत्रं भाष्यकारेण कथं प्रत्याख्यातम् ? तत् प्रदर्शय ।**

उत्तरम्—ननु "उपसर्जनीभूतास्तु न सर्वादयः" इति वार्तिकेनैव बहुव्रीहेः सर्वनामसंज्ञानिषेधे सिद्धे "न बहुव्रीहौ" इति सूत्रं व्यर्थम्, इति चेद् ? न । "न बहुव्रीहौ" इति सूत्रस्य बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न इत्यर्थस्वीकारेण तस्यावश्यकत्वात् । तथाहि—त्वकं पिता यस्य सः त्वत्कपितृकः । अहकं पिता यस्य सः मत्कपितृकः । युष्मद् सु पितृ सु इति समासात् प्राक् अलौकिकविग्रहवाक्ये 'न बहुव्रीहौ' इत्यनेन सर्वनामसंज्ञा निषिध्यते । तेन युष्मदस्मच्छब्दस्य समासघटकस्य सर्वनामसंज्ञाभावात् अकच् न, किन्तु कप्रत्यय एव । तेन त्वत्कपितृकः मत्कपितृकः इति च सिध्यतः । "न बहुव्रीहौ" इत्यस्य चिकीर्षिते इत्यर्थास्वीकारे अलौकिकप्रक्रियावाक्ये सर्वनामसंज्ञायाः निषेधाभावेन अकचि सति त्वकत्पितृकः मकत्पितृकः इति लौकिके विग्रहवाक्य इव समासेऽपि श्रूयेत । न च निमित्तस्य अनुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता न भविष्यतीति वाच्यम् ? तस्याः अनित्यत्वात् । तत्र च एतत्सुत्रस्यैव ज्ञापकत्वात् । यथा अतिक्रान्तो भवकन्तं अतिभवकान् इत्यत्र अकृतव्यूहपरिभाषाया अनित्यत्वेन प्रक्रियावाक्ये अकचि सति समासेऽपि तस्य श्रवणमिति सूत्रकारः ।

भाष्यकारस्तु 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वार्तिकं स्वीकृत्य प्रक्रियावाक्ये सर्वनामसंज्ञानिषेधाभावेन तत्राकचि समासेऽपि तत्श्रवणम् । 'त्वकत्पितृकः, 'मकत्पितृकः, इति रूपे इष्टे स्वीकुर्वन् एतत्सूत्रं प्रत्याचख्यौ । न च वार्तिकापेक्षया सूत्रस्य प्राबल्येन वार्तिकेन तत्खण्डनमनुचितमिति वाच्यम् ? "यथोत्तरं मुनीनां प्रामाण्यम्" इति परिभाषणात् ।

**प्रश्नः—"संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इत्यनेन सर्वेषां गतार्थत्वं कीदृशमिति तत् प्रदर्शय ।**

उत्तरम्—"सर्वादीनि सर्वनामानि" इति सूत्रे सर्वनाम इति महासंज्ञाकरणेन तस्याश्चान्वर्थतया सर्वाण्नमयन्ति सर्वेषां नामानि इति वा विग्रहेण प्राधान्येन—इतराविशेषणत्वेन, स्वीयसर्वार्थोपस्थापक इत्यर्थलाभात् तादृशसर्वादिगणपठितश-

र्थानामेव सर्वनामसंज्ञा। सर्वनामसंज्ञोद्देश्यसर्वादीनां शब्दानां प्राधान्येन स्वीय-सर्वार्थोपस्थापकानामेव च गणे सन्निवेशेन त्यदादयः शब्दा अपि तादृशा एव पठ्यन्ते इति "त्यदादीनामः" इत्यत्वं "तदोः सः सावनन्त्ययोः" इति सत्वम्, "अद्ड्डतरादिभ्यः पञ्चभ्यः" इत्यद्डादेशश्च तादृशार्थोपस्थापकशब्दानामेवेति संज्ञाया-मुपसर्जनत्वे च सर्वादीनां सर्वनामसंज्ञा अत्वं सत्वम् अद्ड्डादेशश्च न भवन्तीति क्रमेण सर्वो नाम कश्चत् तस्मै सर्वाय देहि अतिक्रान्तः सर्वम् अतिसर्वः तस्मै अतिसर्वाय देहि। अतिकतरं कुलम्, अतितत्, इत्युदाहरणानि।

**प्रश्नः—"द्वन्द्वे च" इत्यनेन सर्वनामसंज्ञानिषेधो द्वन्द्वघटकानां उत द्वन्द्वसमुदायस्य भवति तदुपपादय।**

**उत्तरम्**—वर्णाश्च आश्रमाश्च इतरे च वर्णाश्रमेतराः तेषां वर्णाश्रमेतराणामित्यत्र वर्णाश्रमेतर इति समुदायस्य तदन्तविधिना "सर्वादीनि सर्वनामानि" इति सूत्रेण प्राप्ता सर्वनामसंज्ञा "द्वन्द्वे च" इति सूत्रेण निषिध्यते।

ननु वर्णाश्रमेतर इति समुदायस्य प्रकृतसूत्रनिषेधेन सर्वनामत्वाभावेऽपि इतर-शब्दस्य सर्वनामत्वमस्तीति ततः परस्यामिवभक्तेः "आमि सर्वनाम्नः सुट्" इति सूत्रेण तदन्तविधिना सर्वनामसञ्ज्ञकेतरशब्दान्तादङ्गात्परत्वेन सुडागमापत्तिरिति चेद्? न। तत्र सूत्रे सर्वनाम्नः इति पञ्चम्या विहितविशेषणत्वस्वीकारेण अवर्णान्तादङ्गात्परस्य सर्वनाम्नो विहितस्यामः सुट् भवतीत्यर्थेनात्र इतरशब्दात् विहितत्वाभावेन तदप्रवृत्तिः।

**प्रश्नः—जरसादेशविषये वृत्तिकारस्य कोऽभिप्रायः भाष्यकाराणां तदभिमतं नवेति तदुपपादय।**

**उत्तरम्**—जरसादेशात् विभक्त्यादेशाः पूर्वविप्रतिषेधेन भवन्तीति स्वीकृत सन्निपातपरिभाषायाश्च "अतो भिस ऐस्" इति सूत्रे ऐस्करणसामर्थ्येन जरसादेशविषये अनित्यत्वमाश्रित्य निर्जरशब्दात् तृतीयैकवचने टाप्रत्यये पञ्चम्येकवचने ङसिप्रत्यये वा "टाङसिङसामिनात्स्याः" इत्यनेन इनादेशे आत् आदेशे च कृते सन्निपातपरिभाषायाः अनित्यत्वात्तस्या अप्रवृत्त्या जरसादेशे कृते निर्जरसिन निर्जरसात् इति रूपे; न तु निर्जरसा निर्जरसः, इति केषांचिन्मतं वृत्तिकारेणोक्तम्। तथा भिसि परे जरसादेशात्पूर्वं भिसः स्थाने ऐसादेशे ततो जरसि निर्जरसैरिति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने ङसः स्यादेशे अजादित्वाभावेन जर-

सादेशाप्रवृत्त्या निर्जरस्येत्येवं रूपं स्वीकृतम्। एतच्च भाष्यविरुद्धम् । तथाहि-"टा-ङसिङसाम्" इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशञ्च विधाय नादेशे परे एत्वम् "आङि चापः" इत्यत्र "आङि च" इति योगं विभज्य साधितम् । त-थाच 'निर्जरसिन' 'निर्जरसात्' इत्येतद् भाष्यविरुद्धमिति स्पष्टम् ।

**प्रश्नः—'यूष्णः' इत्यत्र स्थानिवद्भावेनाकारव्यवधानात् "रषा-भ्याम्" इति णत्वं कथं स्यादिति तदुपपादय ।**

**उत्तरम्**—यूषन् शब्दात् शसि 'यूषन्+अस्' इति स्थिते अत्र भसञ्ज्ञा-याम् "अल्लोपोऽनः" इति अलोपे कृते यूष्न्+अस्' इति जाते तत्र "अचः पर-स्मिन् पूर्वविधौ" इत्यनेन सूत्रेण पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षे परनिमित्तोऽजादेशः स्थानिवत्स्यात्; स्थानिभूतादचः पूर्वत्वेन दृष्टाद्वर्णात्परस्य विधौ कर्तव्ये स्थानिवदिति । पूर्वत्वेन दृष्टात्षकरात् परस्य नकारस्य णत्वे कर्तव्ये स्थानिवद्भावेन अकारव्यवधानेन "रषाभ्यां नो णः समानपदे" इत्यस्य न प्रवृत्तिः, अपि तु "अट्कुप्वाङ्नुम् व्यवायेऽपि" इत्यस्य अड्व्यवायेऽपि प्रवृत्त्या णत्वम् । न च त्रैपादिककार्ये कर्तव्ये स्थानिवद्भावो न भवतीति 'पूर्वत्रासिद्धीये न स्था-निवत्" इति स्थानिवद्भावनिषेध इति वाच्यम् । "तस्य दोषः संयोगादिलोपल-त्वणत्वेषु" इत्यनेन णत्वे कर्तव्ये तत्प्रतिषेधात् । यदि पञ्चमीसमासो न विवक्ष्यते, तदा स्थानिवद्भावाऽप्रवृत्त्या "रषाभ्याम्" इति णत्वम् ।

**प्रश्नः—"पद्दन्नोमास" इति सूत्रे प्रभृतिग्रहणं किमर्थम्?**

**उत्तरम्**—"पद्दन्नोमासहृन्निश" इत्यस्मिन् सूत्रे प्रभृतिपदस्य प्रकारोऽर्थः । प्रकारः-सादृश्यम्, तच्च सुप्त्वधर्मेण । तथाच-यत्र सुप्त्वं स्यात्तत्रादेशा भव-न्ति । एवञ्च दोषशब्दस्य नपुंसकलिङ्गे औङः श्यादेशे दोषन्नादेशो भवति । अत एव 'ककुद्दोषणी' इति भाष्योदाहरणं सङ्गच्छते । एवञ्च प्रभृतिग्रहणस्य प्रकारार्थ-त्वेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यादौ सुविभक्तौ परे पादशब्दस्य पदादेशः सि-द्ध्यति । अन्यथा शसादावेव स्यात् । तेन उक्तभाष्योदाहरणम्, 'पदङ्घ्रिश्चरण' इत्यमरकोषस्थ'पद्'इति रूपञ्चासङ्गतं स्यात् ।

**प्रश्नः—"आतो धातोः" इत्यत्र धातोरितिपदोपादानात् 'क्त्वः' 'श्नः' इत्यत्र आकारलोपः कथं तदुपपादय ।**

**उत्तरम्**—"आतोः धातोः" इत्यत्र आतः इति धातोः इति च सूत्रं विभ-

च्यते। तत्र 'आतः' इत्यस्य आकारान्तभसञ्ज्ञकाङ्गान्त्यस्य लोप इत्यर्थः। क्त्वाइनाप्रत्ययानुकरणक्त्वाइनाशब्दाभ्यां शसि भसञ्ज्ञायां पूर्वयोगेनाकारलोपः। ततो 'धातोः' इति। अस्य तु आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। 'विश्वपः' 'शङ्खध्मः' इत्याद्युदाहरणम्। नचैवं 'हाहान्' इत्यत्रापि पूर्वसूत्रेणाकारलोपापत्तिरिति वाच्यम्। एवं सति सर्वत्रैव पूर्वसूत्रेणाकारलोपसिद्धे-रुत्तरसूत्रस्य वैयर्थ्येन तत्सामर्थ्यात्पूर्वसूत्रस्य क्वाचित्कत्वबोधनेनानिष्टस्थलेऽप्रवृत्तेः।

**प्रश्नः--"शेषो घ्यसखि" इत्यत्र पूर्वसूत्रगत 'यू' इति अनुवर्तते, तस्य किं फलम्।**

उत्तरम्—यूग्रहणाभावे अदन्तशब्दे इनादेशादिना बाधात् घिसञ्ज्ञाफलस्य नाभावादेर्न प्रवृत्तिः। ऋदन्तशब्दे च "ऋतो ङिसर्वनामस्थानयोः" इति सूत्रे, ङिग्रहणेन ङित्सु ऋदन्तस्य गुणश्चेत्तर्हि ङावेवेति नियमेन गुणादिर्न भविष्यतीति यूग्रहणफलं परिच्छेतृवाचकमातृशब्दात् टाविभक्तौ परे नाभावाभाव इत्यलम्।

**प्रश्नः—"हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सूत्रे प्रथमहल्ग्रहणं किमर्थं तद् वद।** 17557

उत्तरम्—ननु 'राजन्+स्' इत्यवस्थायां सकारस्य "संयोगान्तस्य लोपः" इति सूत्रेण लोपे सिद्धे नस्य "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण च सिद्धे 'राजा' इत्यादिपदानां सिद्धौ किं हल्ग्रहणेनेति चेद्? न। "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वेन प्रातिपदिकान्तनकारस्याभावात् नलोपानापत्तेरिति दिक्।

**प्रश्नः—सुसखिशब्दस्य घिसञ्ज्ञा भवति न वा तदुपपादय।**

उत्तरम्—"शेषो घ्यसखि" इति सूत्रे 'असखि' इति पदस्य वर्णसञ्ज्ञापक्षे सखिभिन्नावयवौ याविदितौ तयोर्घिसञ्ज्ञेत्यर्थः। तथाचात्र सुसखिशब्दस्य सखिभिन्नत्वेन तदवयवस्य इकारस्य घिसञ्ज्ञायां नादेशे च 'सुसखिना' इति सिद्धम्। सखिभिन्नं यद् इकारान्तमुकारान्तं तस्य घिसञ्ज्ञेति तदन्तपक्षेऽपि सुसखिशब्दे समुदायस्य 'सुसखि' इत्यस्य सखिभिन्नत्वात् सुलभैव घिसञ्ज्ञा। भाष्यकृन्मते तु प्रकृते घिसञ्ज्ञा नैव लभ्यते। सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोः तयोर्वा घित्वम् इत्यर्थे सुसखिघटक इकारस्य सख्यवयवत्वेन तदभिन्नत्वाभावात् सूत्राप्रवृत्तेरिति दिक्।

प्रश्नः—"त्यदादीनामः" इति सूत्रे त्यदादिगणः द्विपर्यन्तानामेव गृह्यते, भाष्यवचनात् । तदस्वीकारे को दोषः, तद् वद ।

उत्तरम्—"त्यदादीनामः" इत्यस्मिन् सूत्रे त्यच्छब्दादारभ्य सर्वेषां शब्दानां ग्रहणे भवच्छब्देऽपि "त्यदादीनामः" इति सूत्रेण तकारस्याकारे नलोपादिकार्ये च कृते 'भवा' इत्यनिष्टं रूपं स्यान्नतु भवानिति । भवच्छब्दस्य त्यद्शब्दात्प्राक् पाठे कृते भवानिति रूपे सिद्धेऽपि "त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते" इति वार्तिके भवदादीनां मिथः इति पाठेनोक्तवार्तिकेन स च भवांश्चेति विग्रहे तद्शब्दस्यैवैकशेषे भवन्ताविति रूपासिद्धिरिति द्विशब्दपर्यन्तमेव त्यदादेर्ग्रहणमिति दिक् ।

प्रश्नः—दुर्धिया वृश्चिकभियेत्यादौ गतिकारकपूर्वकत्वात् यणा भाव्यमिति दुर्धिया वृश्चिकभिया इत्यादौ इयङ् कथमिति तदुपपादय ।

उत्तरम्—ननु दुरित्यस्य ध्याधातुयोगे "गतिश्च" इति सूत्रेण गतित्वात् वृश्चिकभीरित्यत्र "वृश्चिकाद्भीः वृश्चिकभीरिति समासघटकवृश्चिकशब्दस्यापादानत्वेन कारकत्वाच्च "गतिकारकेतर" इतिवार्तिकेन गतिपूर्वकत्वात् कारकपूर्वकत्वाच्च "एरनेकाचो०"इत्यनेन यण् स्यादिति चेद्? न । 'यत् क्रियायुक्ताः प्रादयः तम्प्रत्येव गत्युपसर्गसञ्ज्ञाः' इति वचनात् । दुःस्थिता धीर्यस्य–दुःशब्दार्थस्य दुष्टत्वस्य, स्थाधात्वर्थेऽन्वयेन ध्याधात्वर्थे अन्वयाभावेन च गतित्वाभावात् । वृश्चिकभियेत्यत्रापि वृश्चिकस्य भीः वृश्चिकभीरिति सम्बन्धसामान्यषष्ठ्या समासेन कारकत्वाभावात् "गतिकारक" इति गतिकारकेतरपूर्वपदत्वात् यणोऽभावः सिध्यतीति दिक् ।

प्रश्नः—नप्त्रादिग्रहणस्य व्युत्पत्तिपक्षे नियमार्थत्वं कथम्, उद्गातृशब्दस्य दीर्घत्वं च कथं तदुपपादय ।

उत्तरम्—"अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" इति सूत्रे "उणादयो व्युत्पन्नानि प्रातिपदिकानि" इति पक्षे नप्त्रादीनां शब्दानां तृन्नन्तत्वात् तृजन्तत्वाच्च तृन्तृच्ग्रहणेनैव दीर्घसिध्या नप्त्रादिग्रहणं सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवतीति सिद्धान्तात् नियमार्थम् । नियमस्य सजातीयापेक्षत्वात् उणादिनिष्पन्नानां तृन्तृजन्तानां चेद् भवति, तर्हि नप्त्रादीनामेवेति नियमयति, तेन पितृभ्रातृप्रभृतीनां नेति फलितम् । नचैवम् उद्गातृशब्दस्याप्युणादिनिष्पन्नतया तस्यापि दीर्घो न स्यादिति वाच्यम् । "समर्थ" सूत्रे'उद्गातारः' इति भा-

स्यप्रयोगदर्शनेन भाष्यप्रामाण्यात् तस्य नियमेन व्यावृत्त्यभावकल्पनात् ।

प्रश्नः—'प्रकृतिवदनुकरणम्' अस्याशयो युक्तियुक्तं सोदाहरणश्चोपपादनीयः ।

उत्तरम्—"यत्तदेतेभ्यः परिमाणे वतुप्" इति सूत्रे एतेभ्यः इत्यत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वमिति ज्ञापयति—'प्रकृतिवदनुकरणम्' इति । प्रकृत्याऽनुकार्येण तुल्यं वर्तते इति तदर्थः । तत्रैवैकशेषोऽदर्शनात्क्षियः इत्यादौ धात्वनुकरणे विभक्तिकरणाच्च वैकल्पिकत्वमपि प्रकृतिवदनुकरणस्यायातम् । तेन कीः, किरौ, किरः, कृः क्रौ क्रः, इति च सिध्यन्ति । नच अनुकरणस्य अर्थवत्त्वाभावात्प्रातिपदिकत्वं न स्यादिति वाच्यम् । अनुकरणस्य अनुकार्यशब्दरूपार्थेनार्थवत्त्वात्प्रातिपदिकत्वस्य सुलभत्वात् । नचैवं 'भू सत्तायाम्' इत्यादावपि विभक्त्यापत्तिरिति वाच्यम् । एतन्निर्देशादेव क्वचिदनुकरणाद्विभक्त्यनुत्पत्तेरपि स्वीकारात् ।

प्रश्नः—"ओतो णिदिति वाच्यम्" इत्यत्र विहितविशेषणस्य फलं वद ।

उत्तरम्—"ओतो णिदिति वाच्यम्" इत्यस्य हि ओकारान्तात्परं सर्वनामस्थानं णिदिति व्याख्याने हि भानुशब्दात्सम्बुद्धौ "ह्रस्वस्य गुणः" इत्योकारे गुणे सोरोकारात्परत्वेन णिद्वत्त्वे वृद्धावौकारे एङः परत्वाभावेन सुलोपाप्रवृत्तौ रुत्वविसर्गयोः 'हे भानौः' इति स्यात्—अतो विहितविशेषणमाश्रयणीयम् । कृते च विहितविशेषणे सु इत्यस्य ओकारान्ताद्विहितत्वाभावेन न णिद्वद्भावप्रसक्तिरिति । ननु "हे भानो" इत्यत्र यदि वृद्धिः स्यात्तदा "एङ्ह्रस्वात्" इति सूत्रे एग्रहणमेव कुर्यादिति प्रत्याहारग्रहणसामर्थ्यात्सम्बुद्धिनिमित्तकौकारस्य वृद्धिर्न भविष्यतीति कल्पनेन 'हे भानो' इत्यत्र न कोऽपि दोष इति मास्तु विहितविशेषणमिति चेत् ? न । भानुशब्दाज्जसि "जसि च" इति गुणे 'भानो + अस्' इति स्थिते ओतः परत्वाण्णिद्वत्वे वृद्धौ आवादेशे 'भानावः' इति रूपापत्तेः । अतो विहितविशेषणमाश्रयणीयमेवेति दिक् ।

इत्यजन्ताः पुँल्लिङ्गाः ।

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

प्रश्नः—'हे रमे' अस्य सिद्धिः प्रदर्शनीया ।

उत्तरम्—'रमा + सु' इति स्थिते प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकत्वात्

हल्ङ्यादिलोपात्प्रागेव "सम्बुद्धौ च" इत्येत्वे "हल्ङ्याभ्यः" इत्यत्र दीर्घाकार-प्रश्लेषेण स्थानिवत्वाप्राप्त्या तेन लोपाप्राप्तौ "एङ्ह्रस्वात्सम्बुद्धेः" इत्यनेनैव लोपे 'हे रमे' इति सिध्यति । न च सन्निपातपरिभाषाबलात् सम्बुद्धिं निमित्तीकृत्य जायमानस्यैत्वस्य सम्बुद्धिविघातकं प्रत्यनिमित्तकत्वेन लोपो न स्यादिति वाच्यम् । "कष्टाय क्रमणे" "न धातयोः" इत्यादिनिर्देशात् तस्याः अनित्यत्वेनात्र प्रवृत्त्या सम्बुद्धिलोपे बाधकाभावादिति दिक् ।

**प्रश्नः—सर्वासाम् इत्यत्र सर्वा आमिति स्थिते सर्वाशब्दस्य सर्वादिगणपठितत्वाभावेन सर्वनामत्वाभावात् सर्वनामप्रयुक्तसुडागमः कथं तदुपपादय ।**

उत्तरम्—ननु सर्वशब्दात् टापि षष्ठ्येकवचनविवक्षायाम् आमि, सर्वा + आमिति जाते अत्रावन्तसर्वाशब्दस्य सर्वादिगणे पाठाभावात् असर्वनामत्वेन सर्वासामित्यादौ सुट् न स्यादिति चेत् ? न । एकादेशपूर्वस्थानिवदितसमुदायवृत्तिसर्वनामत्वस्यैकादेशविशिष्टे अतिदेशेनावन्तस्य सर्वेत्यस्य सर्वनामत्वात् सुडागमस्य सकलत्वादित्यलम् ।

**प्रश्नः—"असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न" इति वार्तिकमपूर्वं न वेति प्रतिपादय ।**

उत्तरम्—"डलकवतां प्रतिषेधो वक्तव्यः" इदं वार्तिकम् "अम्बार्थं द्व्यक्षरम् यद्वि" इत्यनेन भगवता भाष्यकारेण प्रत्याख्यातम् । तथाच प्रत्याख्यानपक्षे 'हे अक्क' इत्यादौ ह्रस्वो भवति, वार्तिकसत्तायां तु ह्रस्वो न भवतीति फलभेदवारणाय वार्तिकसत्वेऽपि "असंयुक्ता ये डलकास्तद्वतां प्रतिषेधो वक्तव्यः" इत्यर्थोऽवश्यं कार्यः । एवञ्च "असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न" इति नापूर्वं वार्तिकम्, किन्तु फलितमेवेति दिक् ।

**प्रश्नः—यद्यपि जरसादेशस्य स्थानिवद्भावेन आबन्ततामाश्रित्य "औङ आपः" इयं फक्किका युक्तियुक्तमुपपादनीया ।**

उत्तरम्—जराशब्दात् औङि, आङि, ङे, ओसि, आमि, ङौ च परतः विभक्त्यादेशेभ्यः परत्वात् जरसादेशेऽपि तस्य स्थानिवद्भावेन आप्त्वस्याल्मात्रवृत्तित्वाभावादनल्विधाविति निषेधाप्रवृत्तेराबन्ततया "औङ आपः" "आङि चापः" "याडापः" "ह्रस्वनद्यापः" "ङेराम्" इति पञ्चसूत्रैः 'श्री'त्याद्या-

देशापत्तिरप्यपि प्राप्नोति, एवं नासिका-निशा-पृतना शब्दानां स्थाने "पद्दन्" इति "मांसपृतनासानूनाम्" इत्यनेन च नस् , निश् , पृत् , आदेशेषु सत्सु तत्रापि स्थानिवद्भावेन 'शी'त्याद्यादेशापत्तिः, तथापि "औङ आपः" इत्यादिपूर्वोक्तसूत्रेषु आप्पदे आकारात्पूर्वं सवर्णदीर्घेणाकारं प्रश्लिष्य आकाररूपो य आप् तदन्तादङ्गादिति सर्वत्रार्थस्वीकारेणाप्त्वे "अनल्विधौ" इत्यस्याप्रवृत्तावपि आप्त्वस्य आमाश्रवृत्तिधर्मत्वेन "अनल्विधौ" इति निषेधात्स्थानिवद्भावेन आहवमानेतुमशक्यत्वेन तत्तत्सूत्राप्रवृत्त्या न 'शी'त्याद्यादेशापत्तिः । न च "हल्ङ्याब्भ्यो दीर्घात्" इति सूत्रेऽपि आप्पदे ङीप्पदे च आकारस्य ईकारस्य च प्रश्लेषात् आकाररूपाबन्तात् ईकाररूपङ्यन्ताच्च परम् इत्यर्थेन 'अतिखट्वः''निष्कौशाम्बिः' इत्यत्र"अनल्विधौ" इति निषेधात् आप्त्वस्य ईत्वस्य च स्थानिवद्भावेन आश्रयणासम्भवात् "हल्ङ्याप्" इति सूत्रस्याप्राप्तौ दोषवारणेन तदर्थं सूत्रे दीर्घग्रहणं व्यर्थमिति वाच्यम् । तस्यैवं प्रत्याख्यानसम्भवात् , इष्टत्वाच्च ।

ननु सर्वत्राप्पदे आकारप्रश्लेषेण आप्त्वस्य "अनल्विधौ"इति स्थानिवद्भावनिषेधेऽपि अतिखट्वाय इत्यत्र स्वाश्रयम् आकारत्वं स्थानिवद्भावेन आप्त्वं चाश्रित्य "याडापः" इत्यनेन याडागमापत्तिरिति चेद् ? न । 'आपः' इति पञ्चम्या 'अङ्गाधिकारे पञ्चम्या यदुच्यते विहितविभक्तेस्तद् भवतीति सिद्धान्तात् विहितविशेषणत्वमाश्रित्य आपः प्रत्ययग्रहणतया "प्रत्ययग्रहणे यस्मात्स विहितः" इति परिभाषैकवाक्यतया आप् यस्माद्विहितस्तदादि तदन्तं यदङ्गं तस्माद्विहितस्य ङित्प्रत्ययस्य याट् स्यादिति "याडापः"इति सूत्रार्थस्वीकारेण अतिखट्वा इत्यस्मात् ङे प्रत्ययस्य विहितत्वेऽपि तस्याबन्ततदादित्वाभावेन खट्वा इत्यस्याबन्ततदादित्वेऽपि ततो ङेप्रत्ययस्य विहितत्वाभावेन "याडापः" इत्यस्याप्रवृत्त्या आपत्त्यभावात् । न च परमखट्वायै इत्यत्रापि अतिखट्वा इतिवत् याटा न भाव्यमिति वाच्यम् । "स्त्रीप्रत्यये चानुपसर्जनेन" इत्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावादित्यलम् ।

**प्रश्नः—प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे त्रिशब्दस्य स्त्रियां विद्यमानत्वेन तत्र तिस्रादेशो भवति न वा तदुपपादय ।**

**उत्तरम्**—प्रियास्तिस्रो यस्य तत्कुलमिति विग्रहे त्रिशब्दस्य स्त्रियां विद्यमानत्वेऽपि "त्रिचतुरोःस्त्रियां तिसृचतसृ" इत्यनेन तिस्रादेशो न भवति । तत्र

प्रियत्रिशब्दात्परस्य सोः "स्वमोर्नपुंसकात्" इति लुकि तस्य "न लुमताङ्गस्य" इति निषेधात्प्रत्ययलक्षणाभावेन विभक्तिपरत्वाऽभावात्। यदि "इकोऽचि विभक्तौ" इत्यत्राचिग्रहणेन "न लुमन्ताङ्गस्य" इत्यस्य अनित्यत्वमाश्रीयते, तदा "प्रत्ययलोपे प्रत्ययलक्षणम्" इति प्रत्ययलक्षणसत्त्वेन विभक्तिपरत्वात्तिस्रादेशे "प्रियतिसृ" इत्यपि रूपम्भवतीति दिक् ।

**प्रश्नः—'अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः, तत्सम्बद्धस्यैवानुवृत्तेर्दीर्घस्यायं निषेधो; न तु ह्रस्वस्य' अस्याः फक्किकाया आशय उपपादनीयः ।**

उत्तरम्—"ङिति ह्रस्वश्च" इत्यत्र इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसञ्ज्ञौ वा स्तः इति प्रथमं वाक्यम् । ह्रस्वाविवर्णावर्णौ स्त्रियां नदीसञ्ज्ञौ वा स्तः, इति द्वितीयं वाक्यम् । तत्र द्वितीयवाक्यात् अतिस्त्रिशब्दस्य ङित्सु नदीत्वविकल्प इत्यर्थः । ननु "नेयङुवङ्स्थानावस्त्री" इत्यतः अस्त्रीत्यस्यानुवृत्तेः कथमिह नदीत्वविकल्प इति चेद् ? न । 'अस्त्री' इति तु इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैव पर्युदासो, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदीत्वस्यापि, तत्सम्बद्धस्यैवानुवृत्तेः । तथाहि—"नेयङुवङ्स्थानौ" इत्यतोऽस्त्रीत्यस्यानुवृत्तिर्वक्तव्या । ततश्च 'इयङुवङ्स्थानौ' इति यत्रान्वेति, तत्रैव तत्सम्बद्धस्य अस्त्रीत्यस्यानुवृत्तिरुचिता । एवञ्च-ह्रस्वादिवाक्ये इयङुवङ्स्थानावित्यस्य अनुवृत्त्यभावात् अस्त्रीत्यस्यापि तत्र नानुवृत्तिरिति दिक् ।

**प्रश्नः—वृत्तिकारादीनां मते नित्यस्त्रीत्वमुपपाद्य प्रधीशब्दस्य रूपम् कीदृक् भवति, कैयटमते नित्यस्त्रीत्वं कथं, तन्मते प्रधीशब्दस्य रूपम् कीदृग् इति उपपादनीयम् ।**

उत्तरम्—वृत्तिकारादीनां मते—पदान्तरं विनाऽपि—पदान्तरसमभिव्याहाराभावेऽपि, स्त्रियां वर्तमानत्वम्—यः शब्दः स्त्रीरूपार्थबोधकः, नित्यस्त्रीत्वम्—सः नित्यस्त्रीलिङ्गः इत्यर्थः । अत एव ब्राह्मण्याम् आध्रीशब्दस्य 'आध्यै' इतिरूपमाश्रितम्भाष्ये । स्त्रियामेव यो वर्तते स एव नित्यस्त्रीलिङ्ग इत्यभ्युपगमे तु तदसङ्गतिः स्पष्टैव । आध्रीशब्दस्य क्रियाशब्दतया त्रिलिङ्गत्वात् । अतः पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम् । इदं तु प्रध्रीशब्दस्य सम्भवत्येव, प्रकृष्ट ध्यातृत्वं निमित्तीकृत्य स्त्रियां वृत्तिसम्भवात् । एवञ्च प्रधीशब्दस्य वृत्ति-

कारादीनां मते लक्ष्मीवद्रूपम् । लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटमतम् । 'स्त्रीविषयावेव यौ यू तयोरेव नदीसंज्ञा' इति "यू स्त्र्याख्यौ नदी" इत्यत्र भाष्यादिति तदाशयः । तन्मते उदाहृतप्रधीशब्दस्य—प्रध्यायतीति प्रधीशब्दस्य, त्रिलिङ्गतया नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि अनदीत्वात् पुंवद्रूपम् । प्रकृष्टा धीरिति विग्रहे प्रादिसमासे प्रधीशब्दस्य मतद्वयरीत्यापि नित्यस्त्रीलिङ्गत्वात् लक्ष्मीवद्रूपमिति यावत् ।

प्रश्नः—"एकाजुत्तरपदे णः" इत्यत्र णकारग्रहणं किमर्थम् ?

उत्तरम्—नन्विह णकारग्रहणं व्यर्थम् । "रषाभ्यां नो णः" इत्यत एव तदनुवृत्तिसिद्धेः । न च "प्रातिपदिकान्तनुम्विभक्तिषु च" इति विकल्पनिवृत्त्यर्थं पुनर्णग्रहणमिति वाच्यम् । आरम्भसामर्थ्यादेव नित्यत्वसिद्धेरिति चेत् ? न । पुनर्णग्रहणस्य स्पष्टार्थत्वात् ।

इत्यजन्तस्त्रीलिङ्गाः ।

---

## अथाजन्तनपुंसकलिङ्गाः ।

प्रश्नः—'अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस्, ततः सन्निपातपरिभाषया न लुक्' अस्याः फक्किकाया आशयो विशदनीयः ।

उत्तरम्—'अजर + अम्' इति स्थिते "स्वमोर्नपुंसकात्" इति लुक् प्राप्तस्तं बाधित्वा तदपवादः "अतोऽम्" इत्यम्भावः प्राप्तः, तं बाधित्वा "विप्रतिषेधे परं कार्यम्" इति परत्वाज्जरस् । न च लुगपवादस्याम्भावस्य जरसादेशेन बाधितत्वात् 'अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिः' इति न्यायात् अमो लुक् स्यादिति वाच्यम् । जरसादेशानन्तरम् अम्सन्निपातमाश्रित्य प्रवृत्तस्य जरसो अमो लुकि निमित्तत्वाभावादित्यलम् ।

प्रश्नः—"ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यस्य क्लीबत्वार्थे वर्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे सिद्धे सूत्रे पुनः प्रातिपदिकग्रहणं किमर्थमिति तदुपपादय ।

उत्तरम्—"ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यस्य क्लीबत्वार्थे वर्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे सिद्धे प्रातिपदिकग्रहणं स्पष्टप्रतिपत्त्यर्थम् ।

सत्त्वप्रधानत्वञ्च—स्वविशिष्टत्वम । वैशिष्ट्यञ्च—स्वघटितत्व, स्वपर्याप्तप्रयोजकता-निरूपितप्रयोज्यतावत्प्रधानतानिरूपिता या अप्रधानता तदसमानाधिकरणा लिङ्ग-संख्यानिष्ठप्रकारतानिरूपिता या विशेष्यता तत्प्रयोजकघटितत्वएतदुभयसम्बन्धेन । 'श्रीपा' इत्यस्य तत्त्वमस्ति, अत्र स्वं पा इति तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्य-तावती श्रीपारक्षणकर्तृनिष्ठा प्रधानता तन्निरूपिताऽप्रधानता क्रियाकर्मभावनिष्ठा लिङ्गसंख्यानिष्ठप्रकारतानिरूपिता विशेष्यता तत्प्रयोजकत्वं 'श्रीपा' इत्यस्य तद्-घटितत्वं 'श्रीपा' इत्यस्येति लक्षणसमन्वयः ।

**प्रश्नः—'श्रीपाय' इत्यत्र "आतो धातोः" इत्याकारलोपस्य सन्नि-पातपरिभाषया कथं वारणं कृतम्, तदुपपादय ।**

उत्तरम्—श्रीपाशब्दस्य "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वत्वे ङेर्यादेशे "सुपि च" इति दीर्घे 'श्रीपाय' इति सिद्धम । सन्निपातपरिभाषा तु "कष्टाय क्रमणे" इति निर्देशात् न प्रवर्तते । नन्वत्र ह्रस्वत्वे कृतेऽपि प इत्यस्य एकदेशविकृतन्यायेन धातुत्वानपायात् दीर्घे कृते आकारान्तत्वाच्च "आतो धातोः" इत्याल्लोपः स्यात, यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्यय-तया च तस्मिन् परे भत्वस्यापि सत्वादिति चेद् ? न । सन्निपातपरिभाषाविरो-धात् । तथाहि—ह्रस्वत्वमवर्णत्वं च समुदितं यादेशस्य उपजीव्यम् । तत्र कष्टायेति निर्देशात् सन्निपातपरिभाषां बाधित्वा कृतेऽपि दीर्घे ह्रस्वत्वांश एव निवृत्तः । अ-वर्णत्वांशस्त्वनुवृत्त एव । तस्याप्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति भवेदेव सन्निपातपरिभाषाविरोधः इति दिक् ।

वस्तुतस्तु "आतो धातोः" इत्यत्र "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया प्रतिपदोक्त-आकारस्य ग्रहणात् प्रकृते आकारस्य लाक्ष-णिकत्वेन न लोपप्रसक्तिरिति दिक् ।

**प्रश्नः—"न लुमताङ्गस्य" इति निषेधस्यानित्यत्वेन 'हे वारे, हे वारि' इति भवति, तत्र "न लुमताङ्गस्य" इत्यस्यानित्यत्वं कथम् ? तदुपपादय ।**

उत्तरम्—हे वारि सु इत्यत्र सोर्लुकि "न लुमताङ्गस्य" इति प्रत्ययलक्षण-निषेधेन न सम्बुद्धिनिमित्तको गुणः । तेन 'हे वारि' इति सिद्ध्यति । "न लुम-ताङ्गस्य" इत्यस्यानित्यत्वात्पक्षे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति प्रत्ययलक्षणेन "ह्रस्वस्य गुणः" इति सम्बुद्धिनिमित्तकगुणे 'हे वारे' इति भवति । "न लुमता-

ङ्गस्य" इत्यस्यानित्यत्वे हि "इकोऽचि विभक्तौ" इत्यत्राज्ग्रहणं ज्ञापकम् ।

तथाहि-"इकोऽचि विभक्तौ" इत्यत्र अचिग्रहणाभावे हलादिषु भ्यामादिषु परेषु, सत्यपि नुमि "नलोपः प्रातिपदिकान्तस्य" इति नस्य लोपसम्भवाद्वयीति व्यर्थम् । न च सम्बुद्धिव्यावृत्त्यर्थम् अज्ग्रहणम् । तत्र नुमि सति "न ङिसम्बुद्ध्योः" इति निषेधे सति नकारश्रवणप्रसङ्गादिति वाच्यम् ? सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरेवाभावात् । "न लुमताङ्गस्य" इति निषेधस्यानित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणं चरितार्थम् । एवञ्च अज्ग्रहणं "न लुमताङ्गस्य" इत्यस्यानित्यत्वे लिङ्गमिति दिक् ।

प्रश्नः—"तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इत्यत्रस्थभाषितपुंस्कस्यार्थः स्पष्टमुपपादनीयः ।

उत्तरम्—ननु भाषितपुंस्कमित्यस्य भाषितः पुमान्येन शब्देनेत्यर्थकरणेऽनादिशब्दे तत्सत्त्वेऽपि पीलुशब्देनाऽपि पुंसो भाषितत्वात्तत्र पुंवद्भावातिप्रसङ्गो दुर्वारस्तस्माद्भाषितः पुमान्यस्मिन्प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । यस्य शब्दस्य पुन्नपुंसकयोरेकप्रवृत्तिनिमित्तं तस्य पुंवत्त्वमिति पर्यवसितोऽर्थः । एवञ्च अनादिशब्दस्य पुंसि क्लीबे चाऽरोपिताऽऽदित्वं प्रवृत्तिनिमित्तमेकमेवेति भवत्येव पुंवत्त्वम् । पीलुशब्दस्य तु वृक्षे वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तम्, फले फलत्वव्याप्यजातिः प्रवृत्तिनिमित्तमित्युभयत्रैकजातेस्तत्त्वाभावेन न पुंवत्त्वमिति ।

प्रश्नः—प्ररिशब्दस्य आमि रूपं प्रदर्श्य तत्रत्यमतभेदो वर्णनीयः ।

उत्तरम्—प्रकृष्टः राः-धनं, यस्य इति बहुव्रीहौ प्ररैशब्दः । तस्य नपुंसकह्रस्वत्वेन इकारः 'प्ररि' इति, तस्माद् आमि 'प्ररि + आम्' इति स्थिते अत्र "ह्रस्वनद्यापः" इति नुटि प्राप्ते "इकोऽचि" इति नुमि च प्राप्ते "नुमचिरतृज्वद्भावगुणेभ्यो नुट् पूर्वविप्रतिषेधेन" इति पूर्वविप्रतिषेधान्नुमं बाधित्वा नुटि कृते "रायो हलि" इत्यात्वे 'प्राराणाम्' इति माधवः ।

वस्तुतस्तु—ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वासम्भवात् नुटि आत्वं न भवतीति 'प्ररीणाम्' इत्येव साधु । ननु एवं तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकं "नामि" इति दीर्घं प्रति कथं निमित्तत्वमिति चेत् ? न । "नामि" इति दीर्घस्यारम्भसामर्थ्यात्सन्निपातपरिभाषा बाध्यते इत्युक्तत्वादिति दिक् ।

इत्यजन्तनपुंसकलिङ्गाः ।

# अथ हलन्तपुँल्लिङ्गाः ।

**प्रश्नः—"दादेर्धातोर्घः" इति सूत्रे उपदेशपदस्य कथं लाभः, तदभावे च को दोषः तदुपपादय ।**

**उत्तरम्—**"दादेर्धातोर्घः" अत्र धातोरित्यावर्तते, एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति–धातोरवयवस्य हस्येति । द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति । तेन "दादेर्धातोर्घः" इत्यस्य उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते चेत्यर्थः सम्पन्नः । अत्र उपदेश इति किम् ? अधोक् इत्यत्र यथा स्यात् । दामलिहमात्मनः इच्छति दामलिह्यति; ततः क्विपि दामलिट् अत्र माभूत् । तथाहि–उपदेशपदाभावे आगमसमभिव्याहारे आगमविशिष्टस्य धातुत्वात्तस्य च दादित्वाभावादधोगित्यत्र घत्वं न स्यादित्यव्याप्तिः । दामलिडित्यत्र दादित्वाद् घत्वं स्यादित्यतिव्याप्तिर्दोषस्तद्वारणायोपदेशपदमावश्यकम् । कृते चोपदेशे अधोगित्यत्रौपदेशिकदादित्वस्य सत्वेन घत्वं सिद्धम् । दामलिडित्यत्रौपदेशिकदादित्वाभावान्न घत्वं, किन्तु "हो ढः" इति ढत्वमेव भवतीति दिक् ।

**प्रश्नः—"एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रस्थैकाचो धातोः सामानाधिकरण्येनान्वयः, उत वैयधिकरण्येन तदुपपादय ।**

**उत्तरम्—**"एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रे "सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वम्" इति न्यायेन एकाच इति धातोरेव विशेषणं भवितुमर्हति । तेन गर्दभम् आचष्टे गर्दभयति, ततः क्विप् णिलोपः गर्दभ् इत्यादौ धातोरेकाच्त्वाभावेन भष्भावो न स्यादिति लक्ष्यानुरोधेन क्वचित् वैयधिकरण्येनापि अन्वयो भवति । ततश्च धातोरवयवो य एकाच् झषन्तः तदवयवस्य बशः स्थाने भष् स्यादिति सूत्रार्थेन 'गर्धप्' इत्यत्र भष्भावसिद्धिः । नचैवं 'धुघ्' इत्यादौ धातुरेवैकाच् न तु धातोरवयव एकाजिति तत्र भष्भावो न स्यादिति वाच्यम् । "व्यपदेशिवदेकस्मिन्" इति परिभाषया व्यपदेशिवद्भावेन धातावेव धात्ववयवत्वमारोप्य भष्भावसिद्धेः ।

**प्रश्नः—'अनड्वान्' इत्यत्र आमागमो नुमागमश्च प्राप्तः, तत्र नुमा आम् कथं न बाध्यते तत् सर्वमुपपादय ।**

**उत्तरम्—**"सावनडुहः" इति सूत्रे "आच्छीनद्योर्नुम्" इत्यतः आदिति पदमनुवर्तते । ततश्चानडुह्शब्दावयवावर्णात्परो नुम् स्यात् सौ परे इति सूत्रार्थः ।

तेन "चतुरनडुहोरामुदात्तः" इति सूत्रविहितस्य आमः सर्वनामस्थानविषयो भवति, "सावनडुहः" इति विहितस्य नुमस्तु सुविषय एवेति विशेषविहितेनापि नुमा आम् न बाध्यते । आदित्यधिकारात् । यदि नुमा आम् बाध्येत तदा 'आत्' इत्यधिकारो व्यर्थ एव स्यादिति उपजीव्यविरोधः स्पष्ट एव । एवं रीत्या सम्बुद्धावपि अमा च नुम् न बाध्यते । ननु अनड्वानित्यत्र "वसुस्रंसु" इति दत्वं स्यादिति चेत् ? न । "सावनडुहः" इति नुम्विधिसामर्थ्यात् । न च "नलोपः प्रातिपदिकान्तस्य" इति नलोपः स्यादिति वाच्यम् । "संयोगान्तस्य लोपः" इति सूत्रस्य त्रैपादिकत्वेन हलोपस्यासिद्धत्वादिति उक्तरूपस्य सिद्धिरिति दिक् ।

प्रश्नः—'चतुर्णाम्' इत्यत्र णत्वस्यासिद्धत्वात् पूर्वं द्वित्वेन भाव्यम्, इति मूले णत्वं द्वित्वं चतुर्णाम् इति कथमुक्तं तदुपपादय ।

उत्तरम्—'चतुर् + आम्' इत्यत्र "षट्चतुर्भ्यश्च" इत्यनेन आमो नुटि चतुर् नामिति जाते "रषाभ्यां नो णः समानपदे" इति णत्वे "अचो रहाभ्यां द्वे" इति णकारस्य द्वित्वे 'चतुर्णाम्' इति रूपम् । ननु "पूर्वत्रासिद्धीयमद्विर्वचने" इति परिभाषया द्वित्वे कर्तव्ये "पूर्वत्रासिद्धम्" इति सूत्राप्रवृत्त्या परत्वात् द्वित्वेन; ततो णत्वेन भाव्यमिति चेत् ? न । "पूर्वत्रासिद्धीयमद्विर्वचने" इति परिभाषया द्वित्वे कर्तव्ये अन्यदसिद्धं न । न तु द्वित्वस्याऽपि असिद्धत्वं नेति तदर्थात् । एवं च णत्वोत्तरमेव द्वित्वमिति दिक् ।

प्रश्नः—किम्शब्दस्य द्वेः प्राक्पाठकरणेन "किमः कः" इत्यत्र 'इमः' इति न्यासेनापि सिद्धौ "किमः कः" इति गुरुभूतन्यासस्य किम् फलं तदुपपादय ।

उत्तरम्—ननु 'इमः' इति न्यासेऽपि किम्शब्दस्य द्वेः प्राक् पाठकरणेन "त्यदादीनामः" इति सम्पूर्णसूत्रानुवृत्त्या त्यदादीनाम् इमः अः स्यादित्यर्थेन 'कः' इत्यादिप्रयोगसिद्धौ ककारोपादानं व्यर्थमिति चेत् ? न । त्यदादेः इमः अकारविधौ "अव्ययसर्वनाम्नाम्" इति किंशब्दस्याकचि कृते 'ककिम्' इति स्थिते "इमः" इति न्यासेन अकारे कृते 'ककः' इत्यनिष्टरूपापत्तेः । "किमः कः" इत्युक्तौ तु साकच्कस्याऽपि किम्शब्दस्य "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति न्यायेन किम्शब्दत्वात् तस्य कादेशे सति 'कः' इति इष्टरूपस्य सिद्धिः ।

प्रश्नः—'राज्ञः' इत्यत्र अल्लोपस्य स्थानिवत्त्वात् श्चुत्वं कथं

स्यात् , तत् सविस्तरमुपपादय ।

उत्तरम्—'राजन्+अस्' इति स्थिते भसञ्ज्ञायाम् "अल्लोपोऽनः" इति सूत्रेण अकारलोपे "स्तोः श्चुना श्चुः" इति श्चुत्वेन नकारे 'राज्ञः' इति सिध्यति । ननु अत्र "अचः परस्मिन् पूर्वविधौ" इति शस्प्रत्ययनिमित्तीकृत्य भसञ्ज्ञाद्वारा जायमानस्य अल्लोपरूप-अजादेशस्य स्थानिभूतादकारात्पूर्वत्वेन दृष्टत्वात् जकारात्परस्य नकारस्य श्चुत्वे कर्तव्ये स्थानिवद्भावेन अकारस्यानयनेन जकारनकारयोर्मध्ये व्यवधानात् श्चुत्वं न स्यादिति चेद् ? न । "पूर्वत्रासिद्धीये न स्थानिवत्" इति त्रैपादिकत्वेनासिद्धीये श्चुत्वे कर्तव्ये स्थानिवद्भावनिषेधात् ।

न च अल्लोपस्य बहिर्भूतशस्प्रत्ययनिमित्तकतया बहिरङ्गत्वेन "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया असिद्धत्वेन श्चुत्वं न स्यादिति वाच्यम् । तस्याः परिभाषायाः "वाह ऊठ्" इति सूत्रस्थोठ्ग्रहणज्ञापिततया सापादिकत्वेन यथोद्देशपक्षे तद्दृष्ट्या त्रैपादिकश्चुत्वस्यासिद्धतया तत्र तस्याः परिभाषायाः अप्रवृत्त्या अल्लोपस्य असिद्धत्वाभावात् । परिभाषाज्ञापकं तु "वाह ऊठ्" इति सूत्रस्थोठ्ग्रहणमेव । तथाहि—"वाह ऊठ्" इत्यत्र "वाहः" इत्येव सूत्रं कर्तव्यम् । भसञ्ज्ञकस्य वाहः सम्प्रसारणं भवतीति तदर्थः । 'विश्व+वाह्+अस्' इत्यत्र वाहः सम्प्रसारणे पूर्वरूपे च कृते विश्व ऊह् अस् इति जाते अत्र प्रत्ययलक्षणेन णिवरूपार्धधातुकमाश्रित्य "पुगन्तलघूपधस्य च" इति गुणे 'विश्व ओह्+अस्' इति स्थिते "वृद्धिरेचि" इति वृद्धौ 'विश्वौहः' इति सिध्यतीति "वाह ऊठ्" इति सूत्रस्थोठ्ग्रहणं व्यर्थं सत् ज्ञापयति "असिद्धं बहिरङ्गमन्तरङ्गे" इति । तेन अन्तरङ्गे वृद्धौ कर्तव्यायां जातस्य लघूपधगुणस्य बहिरङ्गत्वेन असिद्धत्वात् प्रकृते वृद्धिर्न स्यादिति ऊठ्ग्रहणं स्वांशे चरितार्थमिति दिक् ।

प्रश्नः—'प्रतिदीव्नः' इत्यत्र अल्लोपस्य स्थानिवत्त्वेन "हलि च" इति उपधादीर्घो न स्यादिति तत्र स्थानिवद्भावस्य वारणं कया रीत्या कृतं तत्सम्यगुपपादय ।

उत्तरम्—'प्रतिदिवन्+अस्' इति स्थिते भसञ्ज्ञायाम् "अल्लोपोऽनः" इति सूत्रेण अकारलोपे कृते "हलि च" इति उपधादीर्घे कृते 'प्रतिदीव्नः' इति सिध्यति । नन्वत्र अल्लोपस्य "अचः परस्मिन् पूर्वविधौ" इत्यनेन स्थानिभूतादचो—लुप्ताकारात् पूर्वत्वेन दृष्टस्य इकारस्य दीर्घे कर्तव्ये स्थानिवद्भावेन अकार-

व्यवधानात् हलपरत्वाभावेन "हलि च" इति दीर्घो न स्यादिति चेत् ? न । "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रेण दीर्घे कर्तव्ये स्थानिवद्भावस्य निषेधेन हलपरत्वात् "हलि च" इति दीर्घस्य सुवचत्वात् ।

न च "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया—बाह्यशस्प्रत्ययनिमित्त-काल्लोपस्य बहिरङ्गतया अन्तर्भूतनकारनिमित्तकत्वेन अन्तरङ्गात् "हलि च" इति दीर्घविधायकशास्त्रदृष्ट्या असिद्धत्वात् दीर्घप्रवृत्तिर्न स्यादिति वाच्यम् । यथोद्दे-शपक्षे—"असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषायाः "वाह ऊठ्" इति सूत्र-स्थोठ्ग्रहणज्ञापिततया सापादिकत्वेन तद्दृष्ट्या "हलि च" इति शास्त्रस्य त्रैपादि-कत्वेनासिद्धत्वात् तद्विषये "असिद्धं बहिरङ्गम्" इति परिभाषाया अप्रवृत्तेः । न च कार्यकालपक्षे दोष इति वाच्यम् । एकपक्षेणेष्टसिद्धौ पक्षान्तरेण दोषदान-स्यानुचितत्वात् ।

**प्रश्नः—'वृत्रघ्नः' इत्यत्र "एकाजुत्तरपदे णः" इत्यनेन नकारस्य णत्वं कुतो नेति तदुपपादय ।**

**उत्तरम्**—'वृत्रहन्शब्दात् शसि भसञ्ज्ञायाम् "अल्लोपोऽनः" इत्यकारलोपे "हो हन्ते" इति हकारस्य कुत्वेन घत्वे शसः सस्य रुत्वे विसर्गे च 'वृत्रघ्नः' इति सिद्ध्यति । नचात्र "हन्तेः" इत्यनेन सूत्रेण नकारस्य णत्वं कुतो नेति वाच्यम् । "अत्पूर्वस्य" इत्यनेन ह्रस्वाकारपूर्वकस्यैव हन्तेर्नकारस्य णत्वमिति नियमनात् । अत्र तदभावेन णत्वाप्रवृत्तेः । न च "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन "अत्पूर्वस्य" इति "हन्तेरि"त्यस्यैव नियामकं भवतिः, न भवति "एकाजुत्तरपदे णः" इत्यस्येति प्रकृते "एकाजुत्तरपदे णः" इति णत्वं स्यादिति वाच्यम् । एवं सति "हन्तेरत्पूर्वस्य" इति एकयोगे एव कर्तव्ये तदकरणेन योग-विभागसामर्थ्यात् अत्र "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्याया-प्रवृत्तेर्बोधनेन सन्निहित "एकाजुत्तरपदे णः" इत्यादेरपि तेन नियमात् । न च अ-ल्लोपस्य स्थानिवद्भावेन अकारव्यवधानेन अव्यवहितनकारपरत्वाभावेन कुत्वं न स्यादिति वाच्यम् । नकारे परे कुत्वविधिसामर्थ्यात् कुत्वे कर्तव्ये "अल्लोपस्य स्थानिवद्भावो न भवतीति कल्पनेन अदोषात् ।

**प्रश्नः—'मघवान्' इत्यत्र संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वा-भावात् दीर्घत्वं कथं "मघवा बहुलम्" इति सूत्रं च कथमाकरे प्रत्या-**

ख्यातम्, तदुपपादय ।

उत्तरम्—ननु 'मघवन्' शब्दात् सुप्रत्यये "मघवा बहुलम्" इति नकारस्य स्थाने तृ आदेशे ऋकारस्येत्संज्ञायां लोपे च "उगिद्चाम्" इति नुमि हल्ङ्यादिलोपे संयोगान्तलोपे च कृते मघवनिति जाते संयोगान्तलोपस्य असिद्धत्वेन नान्तत्वाभावात् पचन्नित्यादाविव "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रेण दीर्घो न स्यादिति चेद् ? न । "मघवाबहुलम्" इत्येतत्सूत्रस्थबहुलग्रहणेन "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रेण दीर्घं कर्तव्ये संयोगान्तलोपस्य असिद्धत्वं न भवतीति कल्पनेन अदोषात् । भाष्यकृता हि "श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्०" इत्युणादिसूत्राणि पूजार्थकमहधातोः मनि प्रत्यये हस्य घकारादेशवुगागमयोर्निपातनेन मघवच्छब्दं तस्य रूपाणि च संसाध्य मघशब्दान्मतुप् प्रत्यये "मादुपधायाश्च" इति मघवच्छब्दं तस्य रूपाणि च संसाध्य "मघवा बहुलम्" इति सूत्रं प्रत्याख्यातम् । आरम्भपक्षे संयोगान्तलोपस्यासिद्धत्वे मघवनिति; प्रत्याख्यानपक्षे च "अत्वसन्तस्य चाधातोः" इति उपधादीर्घं मघवानिति, आरम्भप्रत्याख्यानयोः फलभेदप्रसङ्गेन सूत्रारम्भपक्षेऽपि बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वं न भवतीति कल्प्यते ।

प्रश्नः—'अष्टौ' इति रूपं शङ्कासमाधानपूर्वकं साधय ।

उत्तरम्—अष्टन्शब्दात् जसि "अष्टाभ्य औश्" इति कृताकारादष्टनः परयोः जश्शसोरौश्, इत्यर्थात् अत्र कृताकारस्याभावेन औश् कथं स्यादिति चेद् ? उच्यते—"अष्टन आ विभक्तौ" इत्यनेन हलादौ विभक्तौ अष्टन्शब्दस्य विकल्पेन आत्वविधानात् एकमात्रालाघवेन अष्टभ्य इत्येव वक्तव्ये 'अष्टाभ्यः' इति दीर्घोच्चारणं व्यर्थं सत् जश्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदम् अष्टन आत्वम् । तथाहि—"अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणेन तद्वैकल्पिकत्वं ज्ञापयति । तथाहि—"अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणं दीर्घान्तभिन्नादष्टन्शब्दात्सर्वनामस्थानभिन्नहलादिविभक्तीनाम् उदात्तत्वं मा भूदिति, तत्र हलादौ विभक्तौ नित्यमात्वप्रवृत्तेस्तद्रहितरूपाभावेन व्यावर्त्यालाभात् तद् दीर्घग्रहणं व्यर्थं सत् आत्वस्य वैकल्पिकत्वं ज्ञापयति । तेन अष्टभिः अष्टाभिः इत्यादिरूपद्वयसिद्धिरूपं फलं सिद्धम् । एवं च "अष्टभ्य औश्" इत्येव वक्तव्ये "अष्टाभ्य औश्" इति दीर्घग्रहणज्ञापनेन प्रकृते अष्टन्शब्दाज्जसि परे अष्टनो वैकल्पिके आत्वे कृते "अष्टाभ्य औश्" इत्यनेन

जसः औशूत्वे शकारस्येत्संज्ञायां लोपे च सवर्णदीर्घे वृद्धौ च 'अष्टौ' इति रूपस्य सिद्धिः। ननु अष्टन्शब्दाज्जसि विभक्तौ 'अष्टाभ्य औश्'' इत्यनेन जायमानः औशादेशः "आदेः परस्य" इत्यनेन जसोऽकारस्य स्थाने स्यादिति चेत् ? न। "अनेकाल्शित्सर्वस्य" इत्यनेन परत्वात् "आदेः परस्य" इति बाधित्वा सम्पूर्णस्यैव स्थाने भवतीत्याशयात्।

प्रश्नः—'प्रियाष्टनः' इत्यत्र अल्लोपे जाते तत्र ष्टुत्वं कथं नेति तदुपपादय।

उत्तरम्—प्रियाष्टन् शब्दात् शसि भसञ्ज्ञायाम् "अल्लोपोऽनः" इति आकारलोपे रुत्वे विसर्गे च 'प्रियाष्ट्नः' इति सिद्धम्। नन्वत्र "ष्टुना ष्टुः" इति सूत्रेण टकारयोगे नस्य ष्टुत्वेन णकारः स्यादिति चेत् ? न। "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण अल्लोपस्य स्थानिवत्त्वात् अकारव्यवधानात् टकारयोगाभावेन ष्टुत्वाप्रवृत्तेः। न च "पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेधः शङ्क्यः। "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति णत्वे कर्तव्ये तन्निषेधात्। न च लक्षणप्रतिपदोक्तपरिभाषया णत्वपदेन न ष्टुत्वनिष्पन्नणत्वस्य ग्रहणमिति प्रकृते पुनरपि स्थानिवद्भावनिषेधः स्यादिति वाच्यम्। "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया भसञ्ज्ञाद्वारा बाह्यशस्प्रत्ययनिमित्तकाल्लोपस्य बहिरङ्गत्वेन अन्तर्भूतटकारयोगनिमित्तकत्वेन अन्तरङ्गष्टुत्वदृष्ट्या असिद्धत्वात्। न च यथोद्देशपक्षेण 'राज्ञः' इत्यादाविव असिद्धपरिभाषाया अप्रवृत्तिरिति वाच्यम्। एकपक्षेणेष्टसिद्धौ पक्षान्तरेण दोषदानस्यानुचितत्वात्।

प्रश्नः—त्व + अम् अह + अमिति स्थिते अन्तरङ्गत्वात् अमि पूर्वरूपं बाधित्वा स्त्रीत्वविवक्षायां टाप् कथं नेति तदुपपादय।

उत्तरम्—ननु त्वं स्त्री अहं स्त्री इत्यत्र त्व + अम् अह + अमित्यत्र परमपि "अमि पूर्वः" इति पूर्वरूपम् अन्तरङ्गत्वात् बाधित्वा "अजाद्यतष्टाप्" इति टाप् प्रत्ययः कुतो नेति चेत् ? न। "अलिङ्गे युष्मदस्मदी" इत्यभियुक्तोक्त्या तयोर्लिङ्गबोधकत्वाभावेन स्त्रीत्वाभावात् टापोऽप्राप्तेः। ननु युष्मदस्मदोः स्त्रीलिङ्गाभावबोधकं नेदं वचनम्, अपि तु युष्मदस्मच्छब्दयोर्लिङ्गप्रयुक्तकार्येण रूपेषु वैषम्याभावस्यैव बोधकमिति तयोः स्त्रीलिङ्गाबोधकत्वेन पुनरपि टाप्प्रवृत्त्यापत्तिस्तदवस्थैवेति चेत् ? न। "शेषे लोपः" इति सू॰ स्थानिनोऽधिकरणत्वविवक्षया

'शेषे' इति सप्तमीं स्वीकृत्य तस्याः षष्ठ्यर्थत्वावगमात् मपर्यन्तात् शेषस्य भागस्य लोपः इत्यर्थस्वीकारेण मपर्यन्ताच्छेषस्य अद्इत्यस्य लोपेन त्व + अम् अह् + अमिति जाते प्रकृतेः अदन्तत्वाभावेन टापः प्राप्तेरभावादिति दिक् ।

**प्रश्नः--मपर्यन्तस्येत्यधिकारसूत्रं किमर्थं तदुपपादय ।**

उत्तरम्—ननु "मपर्यन्तस्य" इति अधिकारसूत्राभावे अकज्विशिष्टस्यापि युष्मदोऽस्मदश्चादेशे युवकाम् आवकाम् इत्यनयोः सिद्धिर्न स्यादिति चेद् ? न । ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्रागकच्" इत्यस्य 'त्वयका मयका इत्यादिसिद्धये आवश्यकत्वात्, इहापि अकचः प्रागादेशे ततः सुबन्तस्य टेरकचि कृते प्रयोगद्वयस्य सिद्धेः सुलभत्वात् । नन्वेवं पुनरपि "मपर्यन्तस्य" इत्यधिकारस्य व्यर्थत्वमिति वाच्यम् । "मपर्यन्तस्य" इत्यधिकारसूत्राभावे समुदायस्यादेशे कृते 'त्व + आ' 'म + आ' इति जाते 'योऽचि' इत्यनेन अकारस्य यत्वे 'त्व्या म्या' इत्यनिष्टप्रयोगापत्तेः । अतो "मपर्यन्तस्य" इत्यधिकारसूत्रमावश्यकम् । नन्वत्रापि आजादौ विभक्तौ परे अकारस्य एत्वमित्यर्थकेन "अच्ये" इति न्यासेन उक्तप्रयोगोपपत्तौ व्यर्थमेव तद् "मपर्यन्तस्य" इत्यधिकारसूत्रमिति चेद् ? न । 'युष्मद् + भ्याम्, अस्मद् + भ्याम्' इति स्थिते अत्र "ओकारसकारभकारादौ" इति वार्तिकेन अन्तरङ्गत्वात् सर्वनाम्नष्टेः प्रागकचि ततश्च "युवावौ द्विवचने" इत्यनेन सर्वस्य स्थाने युवावादेशे आत्वे च 'युवाभ्याम्' आवाभ्याम्, इति स्यात्, न तु युवकाभ्याम्, आवकाभ्याम् इति, तदर्थमस्य "मपर्यन्तस्य" इत्यधिकारस्यावश्यकत्वात ।

**प्रश्नः--यूयम् वयम् इत्यत्र अन्त्यलोपपक्षे जसोऽमादेशेऽपि तस्य स्थानिवद्भावेन जस् बुद्ध्या "जसः शी" इति श्यादेशः कथं नेति तदुपपादय ।**

उत्तरम्--युष्मच्छब्दात् अस्मच्छब्दाच्च वा जसि "ङे प्रथमयोरम्" इत्यमादेशे "यूयवयौ जसि" इत्यनेन यूयवयादेशयोः कृतयोः "शेषे लोपः" इत्यनेन अन्त्यलोपे "अमि पूर्वः" इतिपूर्वरूपे यूयम् वयमिति च सिध्यतः । नत्वत्र'यूय + अम्' 'वय + अम्' इति दशायाम् अमादेशस्य स्थानिवद्भावेन जस्त्वारोपेण अदन्तसर्वनाम्नः परत्वा "जसः शी" इत्यनेन शी आदेशः स्यादिति चेद् ? न । "अ-

ङ्कार्ये कृते पुनर्नाङ्गकार्यम्" अङ्गकार्ये कृते पुनर्द्वितीयमङ्गकार्यं न भवति, इत्यर्थिकया परिभाषया यूयवयादेशयोः अङ्गकार्ययोः प्रवृत्यनन्तरं इयादेशप्रवृत्तेर्निषेधात्। इयं परिभाषा "ज्यादादीयसः" इत्याद्विधानेन ज्ञापिता। अन्यथा इकारलोपेन "अकृत्सार्वधातुकयोः" इति दीर्घेण च ज्यायानिति सिद्धौ आद्विधानं व्यर्थमेव स्यात्।

ननु 'द्वयोः' इत्यादिनिर्देशेन उक्तपरिभाषायाः अनित्यत्वात् अत्र सा न प्रवर्तेतेति चेद्? उच्यते—"ङेप्रथमयोरम्" इति सूत्रे संयोगान्तलोपेन मकारं प्रश्लिष्यमकारान्तामादेशस्य विधानेन विकारमात्रनिवृत्तेर्व्याख्याततया प्रकृते इयादेशाप्रवृत्तेरिति दिक्।

**प्रश्नः—"भ्यसो भ्यम्" इति सूत्रे भ्यम् अभ्यम् इति द्वयोरपि पदच्छेदयोः सम्भवात् अत्र युक्ततरः कः तदुपपादय।**

उत्तरम्—"भ्यसो भ्यम्" इति सूत्रे भ्यम् अभ्यम् इति द्विधा पदच्छेदः, तत्र भ्यमिति पदच्छेदे "शेषे लोपः" इति सूत्रस्य अन्त्यलोपपक्षे एव युष्मभ्यम् अस्मभ्यम् इति च सिध्यतः अद्भागलोपपक्षे तु तयोरसिद्धिः। अभ्यम् इति पदच्छेदे तु "शेषे लोपः" इत्यस्य अन्त्यलोपपक्षे "अतो गुणे" इति पररूपे 'युष्मभ्यम्' 'अस्मभ्यम्' इति च सिध्यतः। अद्भागलोपपक्षे च अज्झीनपरेण संयोज्य युष्मभ्यम्, अस्मभ्यमिति च सिध्यतः। अयमेव पदच्छेदद्वये भेदः इत्यलम्।

**प्रश्नः—'भाविनः सुटो निवृत्यर्थं ससुट्कनिर्देशः' अस्याः फक्किकाया आशयः सुष्टु उपपादनीयः।**

उत्तरम्—ननु युष्मद् + आमिति स्थिते अदन्तात् परत्वाभावात् "आमि सर्वनाम्नः सुट्" इति सूत्रेण अदन्ताद् परस्यामो विधीयमानस्य सुटो न प्रसक्तिः। न च "शेषे लोपः" इति सूत्रेण अन्त्यस्य दस्य लोपे कृते अदन्तात्परत्वम् आमोऽस्तीति वाच्यम्। आकमादेशात्प्राक् अनादेशतया "योऽचि" इत्यस्य प्राप्त्या "शेषे लोपः" इत्यस्याप्रसक्तेः। तत्र आत्वयत्वनिमित्तेतरविभक्तेरनपेक्षणाच्च। तथाच—ससुट्कनिर्देशो व्यर्थः सूत्रासङ्गतिश्चेति चेद्? न। आकमि "शेषे लोपः" इति लोपे कृते प्राप्तस्य सुटो निवृत्यर्थं ससुट्कनिर्देशस्य कृतत्वात्।

अयमाशयः—आम्येव साम्त्वारोपेण आकमादेशो भवति ससुट्कनिर्देशसामर्थ्यात्। तथाच—आकमादेशे कृते स्थानिवद्भावे साम्त्वबुद्धिरेव भवति, नत्वा-

न्त्वबुद्धिरिति न सुटः प्रसक्तिरिति दिक्।

**प्रश्नः—"युवावौ द्विवचने" "त्वमावेकवचने" इति सूत्रद्वयेऽपि द्विवचनैकवचनशब्दयोरर्थपरत्वम्, उत प्रत्ययपरत्वं, तदुपपादय।**

**उत्तरम्**—"त्वमावेकवचने" "युवावौ द्विवचने" इति सूत्रद्वये एकवचन-द्विवचनशब्दौ न प्रत्ययपरौ किन्त्वर्थपरौ यौगिकौ संख्यापरौ स्तः। अत एव "त्वमावेकवचने" इति सूत्रयोरर्थः-'एकस्य वचने बोधने समर्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः विभक्तौ परतः, द्वयोर्वचने बोधने समर्थयोर्युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ परतः, इति दीक्षितप्रभृतिभिः स्वीकृतः। फलं च—यदि समस्यमाने युष्मदस्मदि द्व्येकत्ववाचिनि समासार्थश्च अन्यसंख्यश्चेत्तदा युवावौ त्वमावपि स्तः; इति थमश्लोकस्याभ्वयः। अर्थो हि—त्वां मां वा अतिक्रान्तः इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे" इति समासे लभमाने युष्मदस्मदि एकत्व-विशिष्टार्थवाचिनि यदाः समासार्थश्च मुख्यविशेष्यभूतो युष्मदस्मदर्थगतसंख्या-पेक्षया अन्यसंख्यकश्चेदपि तदा युष्मदस्मदर्थगतैकत्वे त्वमौ स्तः। तदर्थग-तद्वित्ववाचिनि युष्मदस्मदि समासार्थश्चान्यसंख्याकस्तदा युवावौ एकवचनद्विवचन त्वाभावेऽपि भवत इति। ननु युष्मदस्मदोरेकार्थकत्वे त्वमौ द्व्यर्थकत्वे तु यु-वावौ इति सर्वत्र स्यातामिति चेद्? न। "त्वाहौ सौ" "यूयवयौ जसि" "तु-भ्यमह्यौ ङयि" "तवममौ ङसि" इति सुजस् ङे ङस्सु परतो ये त्वाहादय आदेशा विहितास्ते परत्वात् एकार्थकत्वे त्वमौ, द्व्यर्थकत्वे युवावौ च बाधन्ते इत्याशयात्। द्व्येकसंख्यः समासार्थः बह्वर्थे युष्मदस्मदि यदि स्याताम्, तयोरद्वयेकतार्थत्वात् युवावौ त्वमौ च न स्तः इति दिक्।

**प्रश्नः—'प्रतीचः' इत्यत्र अन्तरङ्गो यण् कुतो न तदुपपादय।**

**उत्तरम्**—ननु प्रतिउपसर्गपूर्वक अञ्चुधातोः क्विनि तस्य सर्वस्य लोपे कृदन्त-त्वात्प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे भसंज्ञायां नकारस्य "अनिदिताम्" इति लोपे'प्रति+अच्+अस्' इति स्थिते अत्र "अचः" इति अकारस्य लोपे प्राप्ते तमन्तरङ्गत्वाद्बाधित्वा "इको यणचि" इति यणः स्यादिति चेद्? न। "अकृतव्यूहाः पाणिनीयाः" इति "अचः" इति लोपेन यणिनमित्तस्याकारस्य विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं-अच्प्रयुक्तं, कार्यं-यण्रूपि कार्यं, न कुर्वन्ति, इत्य-र्थिकया तस्य बाधात्।

प्रश्नः—"अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्" इति कारिका युक्तियुक्तमुपपादनीया ।

उत्तरम्—'अदद्रि+अञ्च्' इति स्थिते "अनिदिताम्" इति नलोपे कृते यणि अदद्र्यच् इति स्थिते ततः सौ तस्य लोपे "अदसोसेर्दादु दो मः" इति सूत्रेण दकारद्वयस्य, "चलीक्लृप्यते" इत्यत्र "कृपो रो लः" इत्यनेन रेफऋकारयोरुभयोर्यथा लत्वं तथैव अत्र दकारद्वयस्यापि मकारे, अकाररेफयोश्चोकारे कृते 'अमुमुयङ्' इति रूपम् । "अलोऽन्त्यस्य" इति सूत्रेण इकारस्योत्वं प्राप्नोति दकारोच्चारणाच्च रेफस्योत्वं प्राप्नोतीति दकारोपादानसामर्थ्येन रेफस्यैवोत्वं स्यादिति पक्षे अन्त्यबाधे अन्त्यसदेशस्य" इति परिभाषया परस्यैव मकारे उकारे च कृते "अदमुयङ्" इति रूपम् । 'असेः' इति निर्देशेन यत्र सकारस्याकारो भवति; तत्रैव मुत्वं भवतीति पक्षे अत्र मुत्वाप्राप्तेः 'अदद्र्यङ्' इति रूपम् । इदं पक्षत्रयमपि भाष्यसम्मतम् । अत उक्तम्—

अदसोद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येके सेर्हि दृश्यते" ॥ इति ।

प्रश्नः—'अप्रत्ययग्रहणं ज्ञापयति अन्यत्र धातुग्रहणे तदादिविधिरिति'तेनायस्कारः इत्यत्र 'अतः कृकमिति सः'इत्येव स्पष्टं क्रियताम् ।

उत्तरम्—"विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" इत्यत्र अप्रत्ययग्रहणं किमर्थम् । तदभावे उत्तरपदाधिकारत्वात् अञ्चुधातूत्तरपदे परे विष्वग्देवयोः सर्वनाम्नश्च टेरद्र्यादेशो भवति इत्यर्थेन यत्र लुप्तप्रत्ययान्तकेवलाञ्चुधातूत्तरपदं यथा—अदमुयङ् इत्यादि तत्रैव तत्प्रवृत्तेः, विष्वगञ्चनमित्यादौ च अञ्चनमित्युत्तरपदस्य अञ्चधातुरूपत्वाभावेन तस्याप्रवृत्तेः सर्वत्राऽदोषादिति अप्रत्ययग्रहणं व्यर्थं सत् ज्ञापयति—"धातुग्रहणे तदादिविधिः" इति । एवं च प्रकृते अप्रत्ययग्रहणाभावे अञ्चुधात्वाद्युत्तरपदे इत्यर्थापत्त्या 'विष्वगञ्चनम्' इत्यत्र अञ्चनमित्यस्य अञ्चधात्वादित्वादद्र्यादेशापत्तिः । अतस्त अप्रत्ययग्रहणं स्वांशे चरितार्थम् । अन्यत्र फलं तु 'अयस्कारः' इत्यत्र "अतः कृकम्" इति सूत्रेण कृधात्वाद्युत्तरपदे इत्यर्थलाभेन कारशब्दे परे विसर्गस्य सादेशसिद्धिरिति दिक् ।

प्रश्नः—"उगिदचाम्" इति सूत्रे अज्ग्रहणं किमर्थम् ? अधातोरित्यस्याऽपि किम् फलं; तदुपपादय ।

उत्तरम्—अञ्चतेरुगित्वादेव नुमि सिद्धे "उगिदचाम्" इति सूत्रे अज्ग्रहणम्–"सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति" इति न्यायेन नियमयति–"धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेव" इति। तेन 'स्रद्, ध्वद्' इत्यादौ उगित्प्रयुक्तो नुम् न। 'उखास्रत् ब्राह्मणी' इत्यादौ च नुम्ङीपौ न भवतः। 'नलोपिन' इति विशेषणं तु 'प्राङ् ब्राह्मणी' इत्यत्र ङीबभावार्थम्। न च पूर्वज्ञापनेनैव अञ्चुधात्वतिरिक्तानां धातूनां नुमोऽभावे सिद्धे; अधातुग्रहणं व्यर्थमिति वाच्यम्। अधातोरिति ग्रहणसामर्थ्यात् भूतपूर्वस्य अधातोरपि उगितो नुम्भवतीति ज्ञापनेन सार्थक्यात्। तेन गोमच्छब्दात् क्यजन्तप्रकृतिकक्विबन्तात् सुप्रत्यये "अत्वसन्तस्य चाधातोः" इति दीर्घे "उगिदचाम्" इति नुमि हल्ङ्यादिलोपे संयोगादिलोपे च गोमानिति सिध्यति।

**प्रश्नः—'सेदुषः' अस्य सिद्धिः शङ्कासमाधानपूर्वकमुपपादनीया।**

उत्तरम्—शद्लृधातोः "भाषायां सदवसश्रुवः" इति लिटः क्वसुः, उकावितौ, "लिटि धातोः" इति द्वित्वं, "पूर्वोऽभ्यासः" इति अभ्याससंज्ञा, "हलादिः शेषः" इति आदिहलः शेषः। "अत एकहल्मध्ये" इति एत्वाभ्यासलोपौ "वस्वेकाजाद्धसाम्" इति इट् सेदिवस् शब्दः। कृदन्तत्वात्प्रातिपदिकसंज्ञायां ततःशसि भसंज्ञायां "वसोः सम्प्रसारणम्" इति सम्प्रसारणे प्राप्ते ततः पूर्वम् "अकृतव्यूहाः पाणिनीयाः" इति परिभाषया कृतमपि कार्यं निवर्तयन्ति इत्यर्थेन इडागमस्य निवृत्तौ ततः सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे "आदेशप्रत्यययोः" इति षत्वे रुत्वे विसर्गे च 'सेदुषः' इति रूपस्य सिद्धिः।

**प्रश्नः—"औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च" अस्याशयः कः तदुपपादय।**

उत्तरम्—इदमत्र तात्पर्यम्—यत्र "औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च" इति वार्तिकं लगति, तत्र औत्वप्रतिषेधः, उत्वं चेति कार्यद्वयं भवतीति 'असुकः' इत्यस्य सिद्धिः। 'असकौ' इत्यत्र "अदस औ सुलोपश्च" इति औकारादेशे विहिते तत्र वार्तिकविहितमुत्वमपि न भवतीति दिक्। इति हलन्तपुँल्लिङ्गाः।

---

## अथ हलन्तनपुंसकलिङ्गाः।

**प्रश्नः—'विमलदिवि' इत्यत्र अन्तरवर्तिनीं विभक्तिमाश्रित्य "दिव उत्" इति उत्वापत्तिः कथं वारिता तदुपपादय।**

उत्तरम्—ननु यथा 'राजपुरुषः' इत्यत्र पूर्वपदस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां नलोपो भवति, तथा 'विमलदिवि' इत्यत्रापि "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रेण प्रत्ययलक्षणे दिव इत्यस्य पदसंज्ञायां सत्यां "दिव उत्" इति उत्वं स्यादिति चेद् ? न। "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" इति वार्तिकेन प्रत्ययलक्षणनिषेधात्। वार्तिकार्थस्तु-उत्तरस्य-उत्तरपदस्य, पदत्वे पदसंज्ञायां, पदप्रयुक्ते कार्ये कर्तव्ये प्रत्ययलक्षणं न भवतीति, उत्तरपदस्य आद्यक्षरस्य कार्ये कर्तव्ये प्रत्ययलक्षणं भवत्येवेति। तथाहि-दध्ना सेचो दधिसेचो इत्यत्र सकारस्य "सात्पदाद्योः" इत्यनेन षत्वनिषेधे कर्तव्ये प्रत्ययलक्षणेन सेच इत्यस्य पदत्वमस्त्येव चकारस्य कुत्वे कर्तव्ये तु पदत्वं नास्तीति।

प्रश्नः—'अहः, अहोभ्याम्' इत्यत्र रत्वरुत्वयोरसिद्धत्वात् नलोपप्रसङ्गः कथं वार्यते, तत् दर्शय।

उत्तरम्—'अहन्+सु' इति दशायां हल्ङ्यादिना सुलोपे 'रोः सुपि" इत्यनेन नकारस्य रुत्वे तस्य विसर्गे च कृते 'अहः' इति रूपम्। अहन्+भ्याम्' इत्यत्र "स्वादिष्वसर्वनामस्थाने" इतिपदसंज्ञायाम् "अहन्" इत्यनेन रुत्वे "हशि च" इत्युत्वे गुणे च कृते 'अहोभ्याम्' इति सिध्यति।

ननु 'अहः' इत्यत्र 'अहोभ्याम्' इत्यत्र च रत्वरुत्वयोरसिद्धत्वात् "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण उभयत्रापि नलोपापत्तिरितिचेद् ? न। "अहन्" इति सूत्रस्य आवृत्तिं कृत्वा एकेन सूत्रेण अहन्शब्दो यादृशो वर्तते तादृशो वर्तताम्; न तु विकृतिमियादित्यर्थबोधनात्। द्वितीयसूत्रेण च अहन्नित्यस्य रुः स्यात् पदान्ते इत्यर्थेन 'अहः, 'अहोभ्याम्' इत्यादौ नलोपापत्तेर्वारणात्। आवृत्तौ माने च—"रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्" इति वार्तिकमेव। अन्यथान लोपे अहोरूपम् इत्यादौ हकारघटक-अकारस्य रेफादेशे रुत्वादेशे वा नास्ति वैलक्षण्यम्। अकाराभावेन "हशि च" इति सूत्रस्याप्रवृत्तेः।

प्रश्नः—'दीर्घाहा' इत्यत्र "अहन्" इति रुत्वं भवति न वा तत्सोपपत्तिकं प्रदर्शय।

उत्तरम्—"अहन्" इति सूत्रे पदाधिकारात् तं प्रति अहन्शब्दस्य विशेषणत्वेन "येन विधिस्तदन्तस्य" इति सूत्रेण तदन्तविधौ अहन्शब्दान्तस्याऽपि रुः स्यात्पदान्ते इत्यर्थेन दीर्घाहन्शब्देऽपि रुत्वम्।

न च "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति परिभाषया तदन्त-विधिनिषेधात्कथमत्र तदन्तविधिरिति वाच्यम्। "ग्रहणवता प्रातिपदिकेन" इति परिभाषायाः प्रत्ययविधिविषयकत्वेनात्राप्रवृत्तेः। न च तदन्तेऽपि रुत्वविधानात् 'दीर्घाह्नौ' इत्यादावपि अन्तर्वर्तिविभक्त्या पदत्वात् रुत्वापत्तिरिति वाच्यम्। "उत्तरपदत्वे च" इति निषेधेन अपदत्वात् उक्तापत्तेरयोगात्। 'दीर्घाहन्+सु' इति दशायां परत्वात् उपधादीर्घे कृते हल्ङ्यादिसूत्रेण सुलोपे प्रत्ययलक्षणेन "असु-पि" इति निषेधात् "रोऽसुपि" इति सूत्रस्याऽप्रवृत्तौ "अहन्" इत्यनेन रुत्वे "भो-भगो" इति अवर्णपूर्वत्वाद्यत्वे "हलि सर्वेषाम्" इति यलोपे 'दीर्घाहा' इति रूपम्।

ननु नान्तलक्षणदीर्घस्य परत्वेऽपि अकृतव्यूहपरिभाषया हल्ङ्यादिलोपात्प्राग् प्रवृत्तिर्न संभवति, रुत्वेन नकारस्य विनाशोन्मुखत्वात्; इति चेद्? न। रुत्वस्या-सिद्धत्वात्, नान्तलक्षणदीर्घे बाधाभावात्। सम्बुद्धौ तु प्रत्ययलक्षणमाश्रित्य 'असम्बुद्धौ' इति प्रवृत्तेरुपधादीर्घाभावे रुत्वे "हशि च" इत्युत्वे आद्गुणे 'दीर्घाहो निदाघ' इति रूपम्।

**प्रश्नः—'अस्रजः पदान्ते कुत्वं सृजेः क्विनो विधानात्। विश्व-सृडादौ तु न। 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्। इयं फक्किका साधु व्याख्येया।**

**उत्तरम्**—अस्रज्शब्दस्य पदान्तविषये कुत्वं भवति। यद्यपि इह क्विप् प्रत्ययो, न तु क्विन्, तथापि कुत्वमेव। "क्विन्प्रत्ययस्य कुः" इत्यस्य क्विन् प्रत्ययो यस्माद्दृष्टः इत्यर्थकरणात्। "ऋत्विक्दधृक्स्रक्" इत्यत्र सृजेः क्विनो विधानात् अस्रुग् इत्यत्र क्विप्प्रत्ययेऽपि कुत्वप्राप्तेः। नचैवं 'विश्वसृड्' इत्यत्रापि कुत्वापत्तिरिति वाच्यम्। "सृजिदृशोर्झल्यमकिति" इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात् अव्ययपूर्वपदे कुत्वाभावबोधनेन उक्तप्रयोगे आपत्त्यभावात्।

ननु षत्वविधायकसूत्रे 'सृज्-मृज्-यज्' इति विशिष्टग्रहणात् षत्वस्य कुत्वा-पवादत्वात् षत्वस्यैव प्राप्तिर्न तु कुत्वस्येति चेद्? उच्यते—"व्रश्चभ्रस्जसृजमृज्" इति सूत्रे सृजियज्योः पदान्ते षत्वं विधीयते। षत्वं कुत्वापवादः। तेन असृजः क्विप्प्रत्ययान्तस्य षत्वमेवोचितम्। स्रग् इति तु ऋत्विग्" इत्यादिना निपा-तनात् कुत्वेन साधु। निपातनं नाम—अन्यादृशे प्रयोगे प्राप्ते अन्यादृशप्रयोग-करणम्। निपातनेन अपवादशास्त्राप्रवृत्तिमात्रे बोध्यते। कुत्वं तु सूत्रेणैव भवति।

एवं च असृगिति अस्यतेरौणादिकेन ऋच् प्रत्ययेन साधु ।

**प्रश्नः—बेभिदि ब्राह्मणकुलानि इत्यत्र नुमागमः कुतो नेति प्रतिपादय ।**

**उत्तरम्**—बेभिद्धातोर्यङन्तात् क्विपि अतो लोपे यलोपे च कृदन्तत्वात् प्रातिपदिकसंज्ञायां प्रथमाबहुवचने जसि "जश्शसोः शिः" इति श्यादेशे 'बेभिदि' इति सिद्धम् । नचात्र श्यादेशस्य "शिः सर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञायां "नपुंसकस्य झलचः" इत्यनेन झलन्तलक्षणो नुम् स्यादिति वाच्यम् । "अचः परस्मिन् पूर्वविधौ" इत्यनेन अल्लोपस्य स्थानिवद्भावात् , अकारबुद्धया झलन्तत्वाभावेन नुमोऽप्राप्तेः । न च अल्लोपस्य स्थानिवत्वात् अजन्तलक्षणनुम् स्यादिति वाच्यम् । "अचः परस्मिन्" इति सूत्रेण पूर्वस्य विधौ स्थानिवद्भावविधानात् स्वविधौ स्थानिवद्भावाप्रसक्तेरिति दिक् ।

**प्रश्नः—शोभनं आपः यस्मिन् सरसि तत् स्वप् , तस्मात् जसि अत्र नुम्दीर्घयोः प्राप्तयोर्मध्ये केन भाव्यम् तदुपपादय ।**

**उत्तरम्**—"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया नित्यात्परादपि नुमः पूर्वं "अप्तृन्" इति दीर्घे पश्चान्नुमि "स्वाम्पि" इति सिध्यति । यदि च प्रतिपदोक्तं कुत्रचित् चरितार्थं न स्यात् ; तदा लक्षणप्रतिपदोक्तपरिभाषाविषयो भवतीति पक्षे "आपः" इत्यत्र "अप्तृन्तृच्" इति सूत्रस्य सफलत्वेन परिभाषाविषयाभावात् पूर्वं नुमि उपधाया अभावेन दीर्घाभावे 'स्वम्पि' इति रूपं स्यादिति ।

इति हलन्तनपुंसकलिङ्गाः ।

## अथ स्त्रीप्रत्ययाः ।

**प्रश्नः—अजादिभिः स्त्रीत्वस्य विशेषणान्नेह पञ्चाजी । "द्विगोः" इति ङीप् । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् । इयं फक्किका साधूपपादनीया ।**

**उत्तरम्**—"प्रत्ययः" "परश्च" इति निर्देशेन 'प्रत्ययविधौ पञ्चम्याः युक्तत्वेन "अजाद्यतष्टाप्" इति सूत्रे अजाद्यतः इति पदस्य पञ्चम्यन्तत्वे प्रातिपदिकादित्यधिकारात् प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन अजाद्यतः इत्यस्यापि पञ्चम्य-

न्तत्वेन द्वयोरेकविभक्तित्वेन विशेष्यविशेषणभावसत्वात् "येन विधिस्तदन्तस्य" इति सूत्रेण तदन्तविधौ अजाद्यन्तात् प्रातिपदिकाट्टाप् स्यात् स्त्रीत्वे द्योत्ये इत्यर्थेन 'पञ्चाजी' इत्यत्रापि टाबापत्तिः। "समासप्रत्ययविधौ प्रतिषेधः" इति तदन्तविधिनिषेधस्तु न शंक्यः। अमहत्पूर्वग्रहणेन "अनुपसर्जनात्" इत्यधिकारेण च स्त्रीप्रत्यये तदन्तविधिज्ञापनात्। एवं च 'पञ्चाजी' इत्यत्र टाबापत्तिवारणाय 'अजाद्यतः' इति पदं सूत्रे षष्ठ्यन्तमेव। एवं सति प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन अजाद्यतः इत्यस्य च षष्ठ्यन्तत्वेन द्वयोः विशेषणविशेष्यभावाभावेन तदन्तविध्यभावात् अजादीनाम् अकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये प्रातिपदिकाट्टाप् स्यादित्यर्थेन पञ्चाजीति समासे पञ्चाजशब्दसमुदायवाच्यं स्त्रीत्वं वर्तते, न तु अजमात्रशब्दवाच्यं स्त्रीत्वमिति न तत्र "अजाद्यतष्टाप्" इत्यनेन टापः प्रसक्तिरिति दिक्।

**प्रश्नः—"शूद्राचामहत्पूर्वा जातिः" अस्य वार्तिकस्य युक्तार्थो वर्णनीयः।**

**उत्तरम्**—"शूद्राचामहत्पूर्वा जातिः" इत्यत्र "शूद्रा च" इति एको योगः। "अमहत्पूर्वा जातिः" इत्यपरो योगः। तत्र पूर्वयोगे जातेरित्यनुकृष्यते। तेन शूद्रशब्दष्टापं लभते जातिश्चेद्वाच्या इत्येकोऽर्थः। महत्पूर्वः शूद्रशब्दष्टापं न लभते जातिश्चेद्वाच्या इति द्वितीयोऽर्थः। एवं च शूद्रत्वजातिविशिष्टा इत्यर्थे शूद्रशब्दाट्टापि दीर्घे शूद्रेति सिध्यति। 'महाशूद्री' इत्यत्र तु महत्पूर्वकत्वेन टापोऽभावः, 'पुंयोगादाख्यायाम्' इत्यनेन ङीषि सति तत्सिद्धिः।

**प्रश्नः-"उगिद्चाम्" इति सूत्रे अञ्ग्रहणेन धातोश्चेदुगित्कार्यं तर्हि अञ्चतेरेवेति नियम्यते। तेनेह न 'उखास्रत्' अस्या आशयः प्रदर्शनीयः।**

**उत्तरम्**—उखापूर्वकस्रंसुधातुरुगित् तस्मात् क्विपि "अनिदिताम्" इति नलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां सुप्रत्यये हल्ङ्याद्लिोपे सकारस्य पदान्तत्वात् "वसुस्रंसु" इति सूत्रेण दत्वे चर्त्वे च कृते उखास्रदिति।

नचात्र उगित्वात् स्त्रीत्वविवक्षायाम् "उगितश्च" इति ङीबापत्तिरिति वाच्यम्। "उगिदचां सर्वनामस्थानेऽधातोः" इति सूत्रे अञ्चुधातोरुगित्वेन नुमि सिद्धे अञ्चुग्रहणेन "सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति" इति नियमात् धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमात् अञ्चुधात्वतिरिक्तधातूनामुगित्कार्याभावज्ञा-

पनेन स्रंसुधातावपि तदप्रवृत्तेरित्यलम् ।

**प्रश्नः—"वनोरच" इत्यनेन वन्नन्तादेव ङान्विहित इति 'अति-सुत्वरी' इत्यत्र ङीप् रश्चादेशश्च कथं ? तदुपपादय ।**

**उत्तरम्**—"प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया प्रत्ययान्ततदादिरूपार्थस्य लाभो भवति । ततश्च प्रत्ययान्ततदादि-र्विशेषणम् प्रातिपदिकं च विशेष्यमिति "येन विधिस्तदन्तस्य" इति सूत्रेण पुन-स्तदन्तविधौ प्रत्ययान्ततदाद्यन्तरूपं यत्प्रातिपदिकम् , तस्मात् स्त्रीत्वे द्योत्ये ङीप् स्यात् , रश्चान्तादेशः इत्यर्थलाभः । न च "ग्रहणवता प्रातिपदिकेन तदन्तविधि-र्नास्ति" इति अत्र द्वितीयतदन्तविधिर्न स्यादिति वाच्यम् ? ' "स्त्रियाम्" इत्य-स्मिन्नधिकारे "शूद्राचामहत्पूर्वा जातिः" इत्यत्र अमहत्पूर्वेतिग्रहणात् सा न प्रव-र्तते इति ज्ञापनात् ।

**प्रश्नः—"टाबृचि" इत्यत्र प्राचीननवीनयोर्मते अर्थभेदः कीदृशः, तमुपपादय ।**

**उत्तरम्**—"पादोऽन्यतरस्याम्" इति सूत्रेण प्राप्तस्य ङीपः इदं "टाबृचि" इति सूत्रमपवाद इति प्राचीनमतम् । नव्यास्तु—"शेषाद्विभाषा" इति सूत्रा-भावे "पादस्य लोपोऽहत्यादिभ्यः" इत्यादिसूत्राणां यथा सावकाशत्वम् , तथा "टाबृचि" इति सूत्रस्यापि "पादोऽन्यतरस्याम्" इतिसूत्रस्य वैकल्पिकत्वेन तदभावपक्षे सावकाशत्वमेव युक्तम् । एवञ्चास्य पूर्वसूत्रस्यापवादत्वं न युक्तमित्या-हुः । परन्तु अत्र प्राचीनमतमेव ज्यायः ।

तथाहि—अपवादशब्दो बाधकपरः, "पादोऽन्यतरस्याम्" इतिसूत्राभावपक्षे "टाबृचि" इति सूत्रं चरितार्थम् । ऋगर्थातिरिक्तार्थे "पादोऽन्यतरस्याम्" इति सूत्रं चरितार्थम् । ऋगर्थे तु तयोः प्राप्तयोः "टाबृचि" इति टाबेवेति परत्वमूलकं बाधकत्वं चात्र युक्तमिति दिक् ।

भाष्ये तु पादशब्दसमानार्थकं पदशब्दमवष्टभ्य इदं सूत्रं प्रत्याख्यातम् ।

**प्रश्नः—'पञ्च, चतस्रः' इत्यत्र नान्तत्वात् उगित्वाच्च ङीप् कथं नेति प्रतिपादय ।**

**उत्तरम्**—पञ्चन्शब्दात् प्रथमाबहुवचने जसि शसि वा "ष्णान्ताः षट्" इति षट्संज्ञायां "षड्भ्यो लुक्" इति लुकि "नलोपः प्रातिपदिकान्तस्य" इति नलोपे

पञ्चेति सिद्धम्। नचात्र कार्यकालपक्षे प्रतिकार्यं संज्ञाप्रवृत्तेः सिद्धान्तिततया जस्शस्लुगर्थं प्रवृत्तया षट्संज्ञया अन्यकार्यसाधनासम्भवेन नलोपोत्तरं 'पञ्च' इत्यत्र षट्संज्ञाया अप्राप्त्या "न षट्स्वस्रादिभ्यः" इत्यस्याप्रवृत्तेरदन्तत्वादजाद्यत-ष्टाप्" इति टाप् स्यादिति वाच्यम्? नलोपे कृतेऽपि नलोपस्य "नलोपः सुप्स्वर-संज्ञातुग्विधिषु कृति" इति नियमेन षट्संज्ञादृष्ट्या असिद्धत्वेन नान्तबुद्ध्या तत्संज्ञा-प्रवृत्तौ "न षट्" इति निषेधेन टापोऽभावात्। न च "न षड्" इत्यनेन ङीप एव निषेधः स्यादितिवाच्यम्, "न षट्स्वस्रादिभ्यः" इत्यनेन हि षट्संज्ञकेभ्यः स्व-स्रादिभ्यश्च स्त्रियां यद् यद् प्राप्नोति तस्य सर्वस्याऽपि निषेधः क्रीयते इति टापोऽपि निषेधसत्वात्। 'चतसृ+जस्' इत्यत्र ऋदन्तलक्षणङीप् न। स्वस्रादिषु चत-सृशब्दस्य पाठात्।

प्रश्नः—"प्रत्ययस्थात्" इति सूत्रे पूर्वस्येति पदं किमर्थं तदु-पपादय।

उत्तरम्—"प्रत्ययस्थात्कात्" इति सूत्रे पूर्वस्येत्यस्याभावे "तस्मादित्यु-त्तरस्य" इति परिभाषया अव्यवहितपरस्येत्यंशोपस्थितौ प्रत्ययस्य ककाराव्यवहित-परस्य अकारस्येत्वं स्यादित्यर्थे 'कटुका' इत्यत्र इत्वापत्तिः। न च कटुक+आ' इति दशायाम् "अकः सवर्णे दीर्घः" इत्यनेन तस्य बाधः स्यादिति वाच्यम्। "वार्णादाङ्गं बलीयः" इति परिभाषया अङ्गकार्यस्य बलवत्वात् सवर्णदीर्घाप्रवृ-त्तेः। कृते तु पूर्वग्रहणे तत्सामर्थ्यात् परिभाषायाः पूर्वमप्रवृत्तौ पूर्वस्याकारस्येत्वभि-ति सूत्रार्थेन प्रकृतेऽदोषात्।

प्रश्नः—"भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि" इति सूत्रस्य व्या-ख्या कार्या।

उत्तरम्—यत्र भस्त्राशब्दोऽनुपसर्जनः तत्र "अभाषितपुंस्काच्च" इत्यनेन इ-त्वम्। उपसर्जने तु "भस्त्रषा" इत्यनेन इत्वम्। 'अनेषका' इत्यादौ इत्वं न सि-ध्यति। तथाहि—'न+सु, 'एतत्+सु' इत्यलौकिकविग्रहे "अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधते" इति परिभाषया त्यदादित्वात्प्राक् सुपो लुकि ततस्त्यदादि-समासरूपप्रातिपदिकाट्टापि सुब्विशिष्टस्य समासत्वे जाते सति समासघटकसुपः पर एवायं टाप् इतीत्वमत्र न भवति। 'असुपः' इति प्रतिषेधात्। इह सूत्रे "उदी-चामातःस्थाने" इत्यस्मात् आतः स्थाने इत्यनुवर्तते। तच्च स्वशब्दाकारस्य वि-

शेषणम् । तूभयेषयोस्तु सर्वनामत्वेन टेःप्राक् अकचि कृते ककारात्पूर्वं ह्रस्वाकारस्य विद्यमानत्वेन आतः स्थाने अकारस्यासम्भवात् । भस्त्रादीनां सर्वत्रैव आतः स्थानिन एव आकारस्य संभवेन व्यभिचाराभावात् । स्वशब्दस्तु यत्र आत्मीयरूपार्थस्य वाचकः तत्रैव स्त्रीलिङ्गे वर्त्तते । एवं सति अनुपसर्जनवाचित्वे अकचि सति आकारस्थाने अकाराभावेन उदाहरणं न भवति, किन्तु यत्र उपसर्जनवाची स्यात्, तत्र सर्वनामत्वाभावेन कप्रत्यये कृते उदाहरणं सम्भवति । तथाच स्वस्या निष्क्रान्ता इति विग्रहे उपसर्जनह्रस्वे टापि अज्ञाता निस्वा निस्विका निस्वका; इति रूपद्वयं सिद्धम्, आत्मीये स्विकेति नित्यमित्वमित्यलम् ।

**प्रश्नः—बहुव्रीहेर्भाषितपुंस्कत्वात् ततो विहितस्य नित्यम् । अज्ञाता अखट्वा अखट्विका, शैषिके कपि तु विकल्प एव । इयं फक्किका युक्तियुक्तं व्याख्येया ।**

उत्तरम्—"अभाषितपुंस्काच्च" इत्यस्य न भाषितः पुमान् येन शब्देन सोऽभाषितपुंस्कः । तस्माद्विहितस्यातः स्थाने अत इद्वा स्यादित्यर्थः । तेन बहुव्रीहेर्भाषितपुंस्कत्वात् ततो विहितस्य नित्यम् । अत्रेदं तात्पर्यम्—अविद्यमाना खट्वा यस्या इति विग्रहे "शेषाद्विभाषा" इति कपो वैकल्पिकत्वेन तदभावपक्षे "गोस्त्रियोरुपसर्जनस्य" इत्युपसर्जनह्रस्वे 'अखट्व' इति जाते ततष्टापि सुपि अज्ञातादौ के सुब्लुकि "केऽणः" इति ह्रस्वे पुनष्टापि अभाषितपुंस्काद्विहिताकारस्थानिकाकारस्य अभावादेव तद्वैकल्पिकेत्वाप्राप्तौ "प्रत्ययस्थात्" इति नित्यमित्वम् । परविशेषणत्वाभ्युपगमे तु आतः स्थानिकाकारस्य अभाषितपुंस्कखट्वाशब्दात्परत्वेन प्रकृतसूत्रेण वैकल्पिकेत्वापत्तिः स्यादेव । शैषिके कपि तु विकल्प एव । अस्यायम्भावः-न खट्वा सु इति स्थिते कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां "समासान्ताः" इति शास्त्रबलेन कबन्तस्यैव समासत्वात् उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकाभावात् "गोस्त्रियोः" इति ह्रस्वत्वाभावेन "केऽणः" इति प्राप्तह्रस्वत्वस्य "न कपि" इति निषेधेन "आपोऽन्यतरस्याम्" इति ह्रस्वे कपः प्राग्वर्तिखट्वशब्दात्परस्य आपो अभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्य वैकल्पिकेत्वे 'अखट्विका' 'अखट्वका' इति । ह्रस्वाभावे तु 'अखट्वाक' इति त्रिविधं रूपम् अत्र निर्बाधमिति दिक् ।

**प्रश्नः-"अनुपसर्जनात्" अस्याधिकारस्य किं फलं तदुपपादय ।**

**उत्तरम्**—ननु अनुपसर्जनाधिकारो व्यर्थः ? स च बहुकुरुचरा इत्यादौ ङी-बादिनिवृत्तिफलकः । नह्यत्र तदन्तविधिं विना ङीबादिप्राप्तिः । तदन्तविधिश्च प्रत्ययविधौ प्रतिषिद्ध इति चेद् ? न । "अनुपसर्जनात्" इतिसूत्रं व्यर्थं सत् 'स्त्रीप्रत्यये तदन्तविधिं ज्ञापयति' इत्याशयात् ।

तथाच बहुकुरुचरा शब्दे यद्धि कुरुचरेति टित् न तदनुपसर्जनम् इति तत्र ङीप् भवति, यद्धि बहुकुरुचेति टिदन्तं तद्धि उपसर्जनम् इति तत्र ङीपोऽभावः सूत्रस्य फलम् । ननु "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इति न्यायेन स्त्रियां विद्यमानं यट्टिदादि तदन्तं तस्मात् ङीप् इत्यर्थे सति कुरुचरशब्दस्य स्त्रियामभावेन ङीप् विधायकसूत्रस्य प्राप्तिरेव न इति चेद् ? न । प्राधान्यात्सूत्रारम्भसामर्थ्याच्च स्त्रियामित्यस्य प्रातिपदिकादित्यस्य विशेषणत्वात् । अन्यथा पुनरपि सूत्रं व्यर्थं स्यात । नच प्राधान्यात "अनुपसर्जनात्" इति प्रातिपदिकविशेषणं स्यात् तथाच कुरुचरेति प्रातिपदिकम् अनुपसर्जनमेवेति ङीप् स्यादेवेति वाच्यम् । सूत्रारम्भसामर्थ्येन "अनुपसर्जनात्" इत्यस्य गृह्यमाणविशेषणत्वात् । एवंच अनुपसर्जनं यट्टिदादि तदन्तं यद्दन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यादिति मूलोक्तार्थः सम्पन्नः । फलं तु—'कुरुचरी' इति । उपसर्जनत्वात् बहवः कुरुचराः यस्यां सा बहुकुरुचरेति बहुव्रीहिरन्यपदार्थप्रधानः । तथा च टिदन्तत्वस्योपसर्जनत्वात् ङीब् नेति दिक् ।

**प्रश्नः—'वक्ष्यमाणा' इत्यत्र स्थानिवद्भावेन टित्वमुगित्वं वा आनीय टित्वादुगित्वाद्वा ङीप् कुतो नेति तदुपपादय ।**

**उत्तरम्**—ननु वच् धातोर्लृटि तत्स्थाने शानचि "स्यतासि" इति स्ये, कुत्वे षत्वे च "आने मुक्" इति मुगागमे जाते "अजाद्यतष्टाप्" इति टापि 'वक्ष्यमाण' इति निष्पन्नम् ।

न च "नल्यपि" इति सूत्रारम्भसामर्थ्येन अनुबन्धकार्ये कर्तव्ये अनल्विधाविति निषेधाभावेन स्थानिवत्त्वाट्टित्वमुगित्वं वावलम्ब्य 'वक्ष्यमाणा' इत्यत्र टित्वादुगित्वाद्वा ङीप् स्यादिति वाच्यम् । यासुटो ङित्वेन 'लाश्रयमनुबन्धकार्यं न आदेशानां भवति इति तन्निषेधात । न च "ङिच्च पिन्न पिच्च ङिन्न" इति भाष्येण यासुटोङित्वं तत्र सार्थकमिति वाच्यम् । "हलः श्नः शानज्झौ" इति सूत्रे शानचः शित्वेन क्वचिदनुबन्धकार्येऽपि "अनल्विधौ" इति निषेधो भवतीति ज्ञापनात् । एवंचात्र स्थानिवद्भावो न भवतीति ङीपोऽप्रवृत्तिरिति दिक् ।

**प्रश्नः—'ताच्छीलिके णेऽपि' इत्यत्र किम्प्रमाणं? चौरीति कथं सिध्यतीति तदुपपादय।**

**उत्तरम्**—चुरा शीलमस्या इति विग्रहे "शीलं" "छत्रादिभ्यो णः" इति णप्रत्यये वृद्धौ आकारलोपे "ताच्छीलिके णेऽपि" इति वचनात् ङीपि चौरीति सिद्ध्यति। उक्तवचने प्रमाणं हि—"कार्मस्ताच्छील्ये" इति सूत्रम्। तत्र हि "अन्" इति विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते। यदि तु णप्रत्यये अण्कार्यं न स्यात्, तर्हि किं तेन वचनेन। तदेव व्यर्थं सत् ज्ञापयति-ताच्छीलिके णेऽपि अण्कार्यं भवतीति। एवं प्रकृते यः ताच्छीलिके अर्थे णो विहितः तत्र अण् निमित्तको ङीप् भवतीति स्वांशे चारितार्थ्यमिति दिक्।

**प्रश्नः—"अनुपसर्जनस्य" इति इहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणम्, किन्तु तदन्तस्य। तेन बहुव्रीहावपि" अस्याः फक्किकायाः आशयः कः इति वद।**

**उत्तरम्**—सह शब्दो विद्यमानवाची, पूर्वशब्दश्च अवयववाची केवलपतिशब्दस्य विद्यमानावयवत्वं न सम्भवतीति पतिशब्देन तदन्तं गृह्यते। अत एव पतिशब्दान्तस्य गृह्यमाणत्वेन "अनुपसर्जनात्" इति ज्ञापकोक्तरीत्या पतिशब्दान्तस्यैव विशेषणम्। तेन 'दृढपत्नी'इत्यादौ बहुव्रीहिसमासेऽपि "विभाषा सपूर्वस्य" इत्यस्य प्रवृत्तिः। "अनुपसर्जनात्" इति च उत्तरार्थमनुवर्तते। तस्य चात्रापि सम्बन्धः। बहवो वृषलपत्न्यो यस्याः इति विग्रहेण आदेशवारणार्थमत्रापि अनुपसर्जनाधिकारस्य फलमायातम्।

**प्रश्नः—अथ वृषलस्य पत्नी इति व्यस्ते कथम्' अस्याः फक्किकायाः आशय उपपादनीयः।**

**उत्तरम्**—ननु वृषलस्य यज्ञे अधिकाराभावेन "पत्युर्नो यज्ञसंयोगे" इति सूत्रस्य अप्रवृत्तिः। समासाभावेन विद्यमानपूर्वत्वाभावात् "विभाषा सपूर्वस्य" इत्यस्याप्यप्रवृत्तिरिति चेद्? न। पत्नीव पत्नीत्युपचारात्। तस्य ह्ययमर्थः— यज्ञयुक्तायां द्विजभार्यायां यः पत्नीशब्दो व्युत्पादितः तस्यैव शूद्रस्त्रियामपि अयज्ञसंयुक्तायां पाणिग्रहणादिधर्मपुरस्कारेण गौण्या वृत्त्या प्रयोगात्। गङ्गायामिति घोलिङ्गस्य तीरे प्रयोगवत् प्रकृतेऽपि। यद्वा पत्नीव आचरति इत्याचारक्विबन्तात् कर्तरि क्विप्। परं च अस्मिन् पक्षे—'पत्नियौ पत्नि :' इति इयङ् स्यादित्यलम्।

प्रश्नः—'गजवाचीनागशब्दः स्थौल्यगुणयोगात् अन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगात् अन्यत्र प्रयुक्तं प्रत्युदाहरणम् अस्याः फक्किकायाः आशय उपपादनीयः।

उत्तरम्—यादृशं स्थौल्यं गजे वर्तते तादृशमेव स्थौल्यं यदि भार्यायां स्यात्, तदा स्थौल्यगुणयोगात् सम्बन्धाद्धेतोः गजवाची नागशब्दः स्त्रियां प्रयुज्यते। एवं स्थूलगुणविशिष्टा भार्या नागीति कथ्यते। अयमेव च नागीशब्दः उदाहरणम्। सर्पविषये—यादृशं दैर्घ्यं वर्तते; तादृशं दैर्घ्यं यदि कस्यांश्चित् भार्यायां स्यात्, तदा तादृशस्य दैर्घ्यगुणस्य सम्बन्धात् सर्पवाचको नागशब्दो भार्यायां प्रयुज्यते। एवं 'नागभार्या' इति प्रत्युदाहरणमिति।

प्रश्नः—"वोतो गुणवचनात्" इति सूत्रे उत् ग्रहणस्य किं फलं तदुपपादय।

उत्तरम्—ननु "वोतो गुणवचनात्" इति सूत्रे उत् इति पदाभावेऽपि अत इत्यस्य सम्बन्धेन अकारान्तादेव ङीष्; इति शुचिशब्दे अकारान्तत्वाभावेन ङीष् न स्यादिति चेद्? न। "खरुसंयोगोपधान्न" इति वार्तिकवैयर्थ्यात्। तथाहि—"वोतो गुणवचनात्" इति सूत्रस्य अकारान्ते यदि प्रवृत्तिः, तदा खरुशब्दे प्रवृत्त्यभावेन निषेधार्थकं वार्तिकमेव व्यर्थम्। न च "कृदिकारादक्तिनः" इत्यनेन ङीषि 'शुची, शुचिः' इति रूपद्वयस्य सिद्धिरिति शुचीति प्रकृतसूत्रस्य प्रत्युदाहरणं न सम्भवतीति वाच्यम्। उणादीनामव्युत्पन्नत्वादित्यलम्।

प्रश्नः—"इन्द्रवरुण" इति सूत्रे ब्रह्मन्शब्दस्य पाठाभावेन ब्रह्माणीति रूपं कथं सिध्यति तदुपपादय।

उत्तरम्—ब्राह्मणम् आनयति जीवयति इति विग्रहे कर्मणि उपपदे "कर्मण्यण्" इति सूत्रेण अण्प्रत्यये अणन्तत्वाङ्ङीपि सति नलोपादिकार्ये च कृते ब्रह्माणीति सिध्यति। अत्र "पूर्वपदात्सञ्ज्ञायामगः" इति णत्वम्। न च "एकाजुत्तरपदे णः" इति णत्वं स्यादिति वाच्यम्। अणि सति प्रातिपदिकस्य द्व्यच्कत्वात् लुप्तेऽप्यणि लोपस्य स्थानिवत्त्वात्।

न च "पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेध इति वाच्यम्। "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति निषेधात्।

प्रश्नः—"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" अत्र स्वाङ्गपदेन कस्य

ग्रहणं स्वाङ्गस्य च लक्षणं किमिति तदुपपादय ।

उत्तरम्—ननु "स्वाङ्गाच्चोपसर्जनात्" इति सूत्रे यदि स्वं च तदङ्गं चेति यौगिकं स्वाङ्गं गृह्येत, तदा सुमुखा शाला इत्यत्रापि स्वाङ्गत्वापत्तिः, द्वाररूपमुखस्य शालाङ्गत्वादिति चेद् ? न । स्वाङ्गं त्रिधा । तथाहि-'अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्' इति । अयमर्थः—अद्रवत्वे सति मूर्तिमत्वे सति प्राणिस्थत्वे सति विकारजभिन्नत्वमिति सुस्वेदा, अत्र न, द्रवत्वात् । सुज्ञाना, अमूर्तत्वात् । सुमुखा शाला, अप्राणिस्थत्वात् । सुशोफा विकारजत्वात् । द्वितीयलक्षणं हि—'अतस्थं तत्र दृष्टं च' तथाह्यर्थः-सम्प्रति प्राणिस्थत्वाभावेऽपि प्राणिनि दृष्टं यत् तदपि स्वाङ्गमिति। सुकेशी सुकेशा वा रथ्या अत्र केशस्य सम्प्रति प्राणिस्थत्वाभावेऽपि प्राणिनि दृष्टत्वात् । तत्र स्वाङ्गत्वेन ङीष्सिद्धिः । तृतीयलक्षणं हि—'तेन चेतत्तथायुतं'—अयमर्थः—येन अङ्गेन प्राणिरूपं वस्तु यथायुतं तेन तत्सदृशेन अङ्गेन तत् अप्राणिरूपं वस्तु तथा प्राणिवद्युतं-युक्तं; चेद् तदपि अप्राणिनि दृष्टं स्वाङ्गमिति । 'सुस्तनी, सुस्तना वा प्रतिमा । अत्र प्राणिवत् प्राणिसदृशे स्थितत्वात् स्वाङ्गत्वेन ङीष्सिद्धिरित्यलम् ।

प्रश्नः—"जातेरस्त्रीविषयादयोपधात्" अत्र जातिपदेन किम् ग्राह्यम्, तस्याः फलं च प्रदर्शय ।

उत्तरम्—"जातेरस्त्रीविषयाद्" इति सूत्रे जातिपदेन त्रिधा जातिर्गृह्यते । तत्र प्रथमलक्षणम्—'आकृतिग्रहणा जातिरिति । आकृतिः-अवयवसन्निवेशविशेषः । ईदृशाकारो गौरित्युपदिष्टे पुच्छलाङ्गूलाद्याकृतिदर्शनेन गवादिषु जातिर्गृह्यते, तदाद्यनुगतेऽपि अनुगतमेकाकारेण प्रतीतं यत्संस्थानम्—अवयवसन्निवेशः । तेन व्यङ्ग्या या, सा जातिरित्यर्थः । तथाहि—नद्यादीनां जलसमीपदेशो यत्र यत्र वर्तते; तत्र तट इति बुद्धिर्जायते; इति तटशब्दादपि जातिलक्षणो ङीष् भवति । परं च एतत् लक्षणं वृषलत्वादीनां जातित्वे साधकं न भवति यतः—हस्ताद्यवयवसन्निवेशो यथा ब्राह्मणादीनां वर्तते; तथा शूद्रस्यापि, इति प्रथमलक्षणेन न गतार्थत्वम् । अत उच्यते—'लिङ्गानां च न सर्वभाक्' इति । एकस्यां ब्राह्मणादिव्यक्तौ एकवारं कथनात्—उपदेशात्, द्वितीयव्यक्तौ कथनं विनापि जातेर्ज्ञानं सुलभमिति वृषलत्वादीनां सिद्धिः । ननु एताभ्याम् औपगवो कठीत्यादेरसंग्रहो; अनुगतसंस्थानव्यङ्ग्यत्वाभावात् । सर्वलिङ्गत्वाच्च; इति चेद् ? उच्यते-'गोत्रं च चरणैः

सह" इति । अपत्यप्रत्ययान्तः चकारात् शाखाध्येतृवाची च शब्दो जातिकार्यं लभते इत्यर्थः । एवं च औपगवी कठीत्यादेः सिद्धिरिति दिक् ।

**प्रश्नः—"नृनरयोर्वृद्धिश्च" इत्यत्र नृशब्देनेष्टसिद्धेर्नरग्रहणस्य किम्फलं तद्दर्शय ।**

**उत्तरम्**—ननु नारीत्यस्य नृशब्दात् प्रकृतवार्तिकेण आद्यचो वृद्ध्या "ऋन्नेभ्यो ङीप्" इति ङीपा, नारीत्यस्य च "पुंयोगादाख्याम्" इति ङीषा च सिद्धौ वार्तिके नरग्रहणं व्यर्थमिति चेद् ? न । नरत्वजातिमात्रप्रतिपादनेच्छायां नरीत्यस्य व्यावृत्त्यर्थत्वेन सार्थक्यात् । न च नरशब्देऽचद्वयस्य सत्त्वेन कस्य वृद्धिरिति न शङ्कनीयम् । लक्ष्यानुसारादादेरेवाचो वृद्धेः स्वीकारादित्यलम् ।

इति स्त्रीप्रत्ययाः ।

---

## अथ विभक्त्यर्थः ।

**प्रश्नः—प्रातिपदिकार्थं निरूप्य लिङ्गग्रहणं सफलय ।**

**उत्तरम्**—स्वार्थद्रव्यलिङ्गसंख्याकारकेति पञ्चविधः प्रातिपदिकार्थः इति पक्षे स्वार्थद्रव्यलिङ्गेति त्रिविधं प्रातिपदिकार्थः इति पक्षे च प्रातिपदिकार्थेनैव लिङ्गस्यापि ग्रहणे सिद्धे लिङ्गग्रहणं व्यर्थं सत् 'नियतोपस्थितिकः प्रातिपदिकार्थः' इति विलक्षणप्रातिपदिकार्थं बोधयति । तथाहि—निपूर्वकयमधातोर्व्यापकत्वमर्थः, तथा च नियता व्यापिका उपस्थितिर्यस्य स नियतोपस्थितिकः । यस्मिन्प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थः । एवञ्चानियतलिङ्गकेभ्यतटादिशब्देभ्यो लिङ्गस्य नियतोपस्थितिकत्वाऽभावेन प्रातिपदिकार्थपदेनाऽग्रहणाच्च ततः प्रथमोत्पत्तिरिति तदर्थमावश्यकं लिङ्गग्रहणमिति । तटः तटी, तटमित्यादौ तटादिशब्दानां पुंस्त्वस्त्रीत्वक्लीबत्वबोधकतत्तत्प्रत्ययसमभिव्याहारात्सकललिङ्गबोधकत्वे ततः कस्यापि लिङ्गस्य नियतोपस्थितिकत्वाऽभावात्तद्बोध्यलिङ्गस्य प्रातिपदिकार्थपदेनाऽग्रहणात्प्रथमाऽनुत्पत्त्या तदर्थं लिङ्गग्रहणस्याऽवश्यकत्वमिति यावत् । कृष्णः श्रीः ज्ञानम् , उच्चैः नीचैः इति अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थं इत्यस्योदाहरणम् ।

**प्रश्नः—'द्रोणो व्रीहिः' अस्य साधुत्वं प्रदर्शनीयम् ।**

**उत्तरम्**—ननु द्रोणादीनां परिमाणमर्थं इति तेभ्यः प्रातिपदिकार्थमात्र एव

प्रथमासिद्धौ परिमाणग्रहणं व्यर्थमिति चेद् ? न । परिमाणग्रहणाभावे प्रातिपदिकार्थे प्रथमाविधानात् प्रातिपदिकार्थस्य प्रत्ययार्थत्वात्तत्र द्रोणस्याभेदान्वयः । प्रत्ययार्थस्य च तस्योक्तसम्बन्धेन व्रीहावन्वयः । तथा च द्रोणाभिन्नो व्रीहिरिति बोधः स्यात् । परमेतद्बाधितम् 'नामार्थद्वयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः' इति व्युत्पत्तिविरोधात् । तस्मात्परिमाणग्रहणमावश्यकम् । कृते हि परिमाणग्रहणे द्रोणशब्दात् प्रथमाविधानेन परिमाणस्य प्रत्ययार्थत्वात् तत्र प्रकृत्यर्थस्य द्रोणस्याभेदेन–अर्थादितरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसम्बन्धेनान्वयः । प्रत्ययार्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वयः । एवञ्च द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति फलतीति दिक् ।

**प्रश्नः—एकः, द्वौ, बहवः इत्यत्र प्रातिपदिकार्थमात्रे प्रथमया कुतो नेष्टसिद्धिरिति युक्तियुक्तमुच्यताम् ।**

**उत्तरम्**—ननु पञ्चकं प्रातिपदिकार्थं इतिनये बहुशब्दस्य संख्याया अपि प्रादिपदिकार्थत्वात्तत्र बहुशब्दात्प्रथमासिद्धौ सूत्रे वचनग्रहणं व्यर्थमिति चेद् ? न, 'उक्तार्थानामप्रयोगः' इति न्यायविरोधेन बहुशब्दात्प्रातिपदिकार्थे प्रथमाऽप्राप्त्या तदर्थमिह वचनग्रहणस्यावश्यकत्वेन सार्थक्यात् । बह्वर्थे विभक्तिर्विधेया स चार्थः प्रकृत्यैव प्रतिपादित इति तस्याभिधानाय पुनर्विभक्तिर्नावश्यिका । यथा—घटोऽस्ति कलशः इति न भवति, इत्यभिप्रायकः "उक्तार्थानामप्रयोगः" इति न्यायविरोधो दुर्वार इति वचनग्रहणमावश्यकम् । न च वचनग्रहणसत्वेऽपि उक्तन्यायविरोधो दुर्वार इति वाच्यम् । वचनग्रहणसामर्थ्यादुक्तन्यायबाधेन विरोधपरिहारात् । न च एकद्विशब्दाद्द्विवचनबहुवचनान्यपि स्युरिति वाच्यम् । अनन्वितार्थकविभक्तिकल्पनापेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वादिति दिक् ।

**प्रश्नः—"कर्तुरीप्सिततमं कर्म" इति सूत्रे कर्तुरित्यस्याभावे काऽनुपपत्तिरिति तत्स्पष्टं सोदाहरणं प्रदर्शय ।**

**उत्तरम्**—ननु कारकाधिकाराद्व्यापारलाभात्तेन कर्तुराक्षेपात् कर्तृवृत्तिव्यापारप्रयोज्यफलवत्त्वप्रकारिकेच्छानिरूपितविषयताऽऽश्रयः कर्मेत्यर्थे 'देवदत्तो ग्रामं गच्छति' इत्यादौ देवदत्तकर्तृवृत्तिव्यापारः उत्तरदेशसंयोगानुकूलरूपः, तत्प्रयोज्यं फलमुत्तरदेशसंयोगरूपं तादृशफलवत्त्वप्रकारिकेच्छा मद्वृत्तिव्यापारप्रयोज्यफलाऽऽश्रयो ग्रामो भवत्वित्याकारिका तादृशेच्छानिरूपिता विषयता ग्रामनिष्ठा तादृशविषयता-

ऽऽश्रयस्य ग्रामस्य कर्मत्वे सिद्धे कर्तुर्ग्रहणं व्यर्थमिति चेद् ? न । तस्य प्रकृतधातूपात्तव्यापाराश्रयकर्तुर्ग्रहणेन सार्थक्यात् । अन्यथा माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थके 'माषेष्वश्वं बध्नाति' इति प्रयोगे माषभक्षणकर्तुरश्वस्य मद्वृत्तिव्यापारप्रयोज्यगलबिलाधःसंयोगरूपफलाश्रयतया माषा भवन्त्वितीच्छायास्सत्वादधिकरणसंज्ञाम्बाधित्वा माषाणां कर्म्मत्वापत्तेः । प्रकृतधातूपात्तव्यापाराश्रयकर्तुर्ग्रहणे तु नोक्तदोषः । अश्वस्य प्रकृतधातूपात्तव्यापाराऽऽश्रयत्वाऽभावेनाऽग्रहणात् ।

**प्रश्नः—"कर्तुरीप्सिततमम्" इति सूत्रे तमब्ग्रहणफलं कर्मग्रहणप्रयोजनञ्च साधु प्रदर्शय ।**

**उत्तरम्**—"कर्तुरीप्सिततमं कर्म" इत्यत्र 'अवयवद्वारा समुदायस्य प्रश्नः' अर्थादीप्सिततमब्ग्रहणं किमर्थम् ? 'कर्तुरुद्देश्यं कर्म' इत्येव सूत्रमस्तु । तथाच—कर्तुः यद् उद्देश्यं तत्र कर्मसंज्ञा स्यादित्यर्थेन 'हरिं भजति' इत्यत्र हरिः फलाश्रयत्वेनोद्देश्यमस्तीति तत्र कर्मसंज्ञा सिद्धा भवति । अथ च कृतभोजनस्य पुरुषस्य पयो लोभेन पुनरपि भोजने प्रवृत्तौ सत्यां 'पयसा ओदनं भुङ्क्ते' इति प्रत्युदाहरणेऽपि लोभाद्धेतोः पयसोऽप्युद्देश्यत्वेन तस्य कर्म्मत्वापत्तिः । ईप्सिततमब्ग्रहणसत्वे तु पयसः कर्तृवृत्तिव्यापारप्रयोज्यगलबिलाधःसंयोगरूपफलाश्रयत्वाभावान्नोक्तापत्तिः । तथाहि—'पयसा ओदनं भुङ्क्ते' इत्यत्र कर्त्ता देवदत्तः, तद्वृत्तिव्यापारो गलबिलाधःसंयोगानुकूलरूपस्तत्प्रयोज्यं फलं गलबिलाधःसंयोगरूपं तदाश्रयत्वप्रकारिकेच्छा—ओदनो गलबिलाधःसंयोगवान् भवतु इत्याकारिका, न तु पयो गलबिलाधःसंयोगवद् भवतु इत्याकारिका, एतादृशेच्छोद्देश्यताश्रय ओदनो, न तु पयः, इति ओदनस्यैव कर्मसंज्ञा भवति, न तु पयस इति दिक् ।

**कर्मग्रहणप्रयोजनम्**—यद्यपि "अधिशीङ्स्थासां कर्म" इत्यतः कर्मपदानुवृत्तिः सम्भवति, तथापि तत्राधार इत्यस्यानुवृत्तत्वात्तत्रापि तत्सम्बद्धस्यैव कर्म्मपदस्यानुवृत्तिः स्यात् सा मा भूत् इति कर्मग्रहणं क्रियते । अन्यथा 'गेहं प्रविशति' इत्यत्रैव कर्मसंज्ञा स्यात् 'हरिं भजति' इत्यादौ न स्यादिति ।

**प्रश्नः—"अकथितञ्च" इति सूत्रस्य सार्थसमन्वयमुदाहरणं प्रदर्शय ।**

**उत्तरम्**—गां दोग्धि पयः, गोः सकाशात् पयः क्षारयतीत्यर्थः । अत्र क्षरणे गोरपादानत्वात् प्राप्तां पञ्चमीं बाधित्वा 'अकथितञ्च' इति कर्म्मत्वे द्वितीया ।

बलिं याचते वसुधाम्—बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयते इत्यर्थः । अत्र कर्तुः कर्मत्वविवक्षायां द्वितीया । यद्वा बलिसम्बन्धिवसुधाकर्मकं यद्दानं तत्प्रार्थयते इत्यर्थः । गर्गाणां शतं दण्डयति । ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः । ग्रहणं हि—परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम् । तत्र स्वत्वविश्लेषे अपादानत्वं प्राप्तम् । तद् अनादृत्य कर्मत्वविवक्षायां द्वितीया इत्यादि ।

**प्रश्नः—'अर्थनिबन्धनेयं संज्ञा' अत्र किम्प्रमाणं तदुपपादय ।**

**उत्तरम्**—"अकथितञ्च" इत्यनेन या संज्ञा साऽर्थनिबन्धना—अर्थनिमित्तिका, न तु स्वरूपाश्रया—स्वरूपनिमित्तिकेति यावत् । नचैत्सूत्रविहितकर्म्मसंज्ञाया अर्थनिमित्तकत्वे किम्प्रमाणमिति वाच्यम् । तद्राजसूत्रस्थभाष्यकैयटयोरेव प्रमाणत्वात् । तथाहि—तत्र 'अहमपीदमचोद्यं चोद्ये' इत्युक्तम् । असौ अस्मान्मामचोद्यं चोदयति इति तदर्थः । तत्र पृच्छिपर्यायस्य चुदेरपि द्विकर्म्मत्वं दृश्यते । इति तदेवात्र प्रमाणम् । अन्यथा—स्वरूपनिमित्तकत्वाश्रये उक्तभाष्यकैयटौ व्याकुप्येतामिति दिक् ।

**प्रश्नः—गतिबुद्धिसूत्रस्य सार्थसमन्वयमुदाहरणं प्रदर्शय ।**

**उत्तरम्**—गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यादिति सूत्रार्थः । 'शत्रून् गमयत्स्वर्गम्' इति गत्यर्थकस्योदाहरणम् । शत्रवः ( युद्धे-मृताः ) स्वर्गमगच्छन् । हरिस्तान् प्रैरिरदिति हरिः शत्रून्स्वर्गमगमयत् । अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः, स्वर्गस्तु कर्म । ण्यन्तावस्थायान्तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शत्रुघातक्रियां प्रति घातयिता हरिः कर्ता । शत्रूणान्तु "गतिबुद्धि" इति सूत्रेण कर्म्मत्वम् । तेन णिज्वाक्ये शत्रुशब्दात् द्वितीया । स्वर्गकर्म्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्मे गतिरस्तु इति वाक्यार्थः । स्वे-स्वकीया, वेदार्थमविदुस्तान् श्रीहरिर्वेदार्थमवेदयत् । तथा—देवा अमृतम् आश्नन् , श्रीहरिस्तान् अमृतम् आशयत् । विधिः वेदमध्यैत, तं ब्रह्माणं श्रीहरिः वेदमध्यापयत्–अपाठयत् । सलिले पृथिवी आस्ते, तां यो हरिराशयत्–स्थापयति स्म । स श्रीहरिः मे गतिरिति यावत् ।

**प्रश्नः–'गतिबुद्धी" इति सूत्रं विध्यर्थमुत नियमार्थमिति प्रदर्शय ।**

**उत्तरम्**—ण्यन्ते उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारः, इत्याद्यर्थे णिजर्थनिरूपितकर्मत्वं गम्धात्वर्थनिरूपितकर्तृत्वञ्च प्राप्तम् इति परत्वात् कर्तृसंज्ञैव

भवति । प्रथमव्यापाराश्रयत्वेन कर्तृसंज्ञा, द्वितीयव्यापारप्रयोज्यफलाश्रयत्वेन कर्म-संज्ञा च प्राप्नोति । अन्तरङ्गाऽपि कर्तृसंज्ञा, अथ च यावत् 'गमयति देवदत्तं यज्ञदत्तः' इत्यादौ देवदत्तस्य कर्तृसंज्ञा न जायते, तावत् हेतुसंज्ञैव न स्यात् । यतः कर्तृप्रयोजकस्य हेतुसंज्ञा भवति, अथ च हेतुसंज्ञां विना णिजपि न स्यादिति । कर्मसंज्ञाया-मुपजीव्यतापि कर्तृसंज्ञा । एवञ्चोक्तहेतुभिर्देवदत्तस्य कर्तृसंज्ञैव सिद्धा भवतीति "गतिबुद्धि:" इत्यादि सूत्रं विध्यर्थमिति मनोरमाकारादीनां मतम् ।

भाष्यकारस्त्वाह—प्रयोजकव्यापारे शब्दतः प्राधान्यमथ चान्याधीनत्वलक्षणार्थप्राधान्यञ्च वर्तते, इति प्रधानकार्यं बलवत्, इति न्यायेन प्रधानाश्रयकर्मसंज्ञैव देवदत्तस्य सिद्धेति "कर्तुः" इत्यनेनैव कर्मत्वे सिद्धे "गति" इत्यादिसूत्रं णिजर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञा चेत्तर्हि गत्याद्यर्थानामेव कर्तुरिति नियमयति । तेन 'पाचयति देवदत्तेन' इत्यादौ कर्मसंज्ञा न भवतीति फलमित्यलम् ।

**प्रश्नः—येषां देशकालादिभिन्नं कर्म न संभवति तेऽत्राकर्मकाः, नत्वविवक्षितकर्माणोऽपि, इत्यत्र प्रमाणं कौमुदीकाररीत्या प्रदर्शय ।**

उत्तरम्—ननु "गतिबुद्धि" इति सूत्रे अकर्मपदस्य न विद्यते कर्म येषामित्यर्थे सकर्मकाणामपि कर्मणोऽविवक्षयाऽकर्मत्वात् देवदत्तेन पाचयतीत्यादौ देवदत्तस्यापि कर्मत्वापत्तिरित्यत आह—येषां देशकालादि इति । अयम्भावः—नियमस्य सजातीयापेक्षत्वात् "गतिबुद्धि" इति सूत्रस्य सकर्मकधातुप्रकृतिकणिजर्थव्यापारप्रयोज्यफलाश्रयाणां कर्मत्वं चेत्तर्हि गत्यर्थादीनामेवेति नियमार्थत्वेन 'आसयत् सलिले पृथिवीम्' इत्यादौ पूर्वसूत्रेण कर्मत्वसिद्धौ सूत्रेऽकर्मकपदस्य सामर्थ्याद्देशकालादिभिन्नकर्माभाववतो ग्रहणम् । तेन देवदत्तेन पाचयतीत्यादौ देशकालाद्यतिरिक्तस्यौदनादिरूपकर्मणः सत्त्वेन तदविवक्षणेऽप्यकर्मकपदेनाग्रहणमिति नोक्तदोषः ।

**प्रश्नः—"अभिनिविशश्च" इत्यनेन 'पापेऽभिनिवेशः' इत्यत्र कर्मत्वं कथन्न तद्युक्तियुक्तं प्रदर्शय ।**

उत्तरम्—"परिक्रयणे सम्प्रदानमन्यतरस्याम्" इति सूत्रादन्यतरस्याम् ग्रहणमत्रानुवर्तते । ननु "परिक्रयणे सम्प्रदानमन्यतरस्याम्" "आधारोऽधिकरणम्" "अधिशीङ्स्थासां कर्म" "अभिनिविशश्च" इति सूत्रक्रमः । तत्र "अभिनिविशश्च" इत्यत्र कथमन्यतरस्याङ्ग्रहणानुवृत्तिः । "आधारोऽधिकरणम्" "अधिशीङ्स्थासां कर्म" इत्यत्र च तदनुवर्तनाभावात् । इति चेत् ? न । मण्डूकप्लुत्या तदनुवृत्तेः स्वी-

कारात् । अन्यतरस्याम् इत्यस्य व्यवस्थितविभाषात्वञ्च स्वीकृत्य क्वचित् आधारस्य कर्मसंज्ञा न भवतीति 'पापेऽभिनिवेश' इत्यत्र कर्मत्वाभावः । प्रमाणञ्च—"एष्वर्थे-ष्वभिनिविष्टानाम्" इति भाष्यम् ।

परे तु—उक्तभाष्यप्रयोगेण यत्र 'अभिनिविश' इत्यनुपूर्व्यां विकारो न भवति, तत्रैव कर्म्मसंज्ञा भवति । 'पापेऽभिनिवेशः' इत्यत्र इकारस्य एकाररूपविकारो जातः, इति तत्र कर्मसंज्ञा न भवेदित्यनुवृत्त्यादिक्लेशो वृथैवेत्याहुरिति दिक् ।

**प्रश्नः—"अनुर्लक्षणे" इत्यस्य कथं गत्युपसर्गसंज्ञाया अपवाद-त्वम् । कथञ्च परापि "हेतौ" इति तृतीयाऽनेन बाध्यते, इति युक्ति-युक्तं प्रदर्शय ।**

उत्तरम्—ननु जपमनु प्रावर्षदित्यत्र वृष्टिं प्रति अनोर्योगाभावेन क्रियायो-गाभावादेतयोः संज्ञयोः प्राप्त्यभावात् कथं तदपवादत्वमस्याः संज्ञाया इति चेद् ? उच्यते—गम्यमाननिशमनक्रियापेक्ष्य तयोः प्राप्तिरस्तीति सम्भावनामात्रेण मूलस्य निर्बाधत्वात् । न चैवं कर्मत्वादेव द्वितीयासिद्धौ किमनया संज्ञयेति वाच्यम् । जपस्य निशमनप्रयुक्तहेतुत्वाख्यसम्बन्धविवक्षया कर्म्मत्वाभावेन तृतीयायां प्राप्तायां तदारम्भात् ।

एवञ्च "अनुर्लक्षणे" इत्यनेन कर्म्मप्रवचनीयसंज्ञायां "कर्म्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयायां 'जपमनु' इति वाक्यघटकजपमित्यस्य सिद्धिः । लक्ष-णत्वञ्च—ज्ञानजनकज्ञानविषयत्वम् । लक्ष्यत्वन्तु ज्ञानजन्यज्ञानविषयत्वम् । तथाच जपस्य वर्षाज्ञानजनकज्ञानविषयीभूतत्वाल्लक्षणत्वेन तस्मिन्ननुद्योत्ये सति अनोः कर्म्मप्रवचनीयत्वेन तद्योगे लक्षणवाचकाज्जपशब्दाद् द्वितीया । जपाऽभिन्न-हेतुज्ञानजन्यज्ञानविषयं वर्षणमिति यावत् ।

लक्षणे—कर्म्मप्रवचनीयसंज्ञाया अवकाशः, यो न हेतुः 'वृक्षमनु विद्योतते विद्युत्' इति, हेतुतृतीयाया अवकाशो 'धनेन कुलम्' इत्यादि । 'जपमनु प्रावर्षत्' इत्यत्र तु हेतुभूते लक्षणे परत्वात्तृतीया स्यात्तामबाधित्वा "अनुर्लक्षणे" इति पुनः संज्ञा-विधानसामर्थ्याद्द्वितीयैव स्यादित्यलम् ।

**प्रश्नः—'सर्पिषोऽपि स्यादिति फक्किकां सम्यगुपपादय ।**

उत्तरम्—'सर्पिषोऽपि स्यात्' इत्यत्र "अपिः पदार्थसम्भावन" इत्यादि सूत्रेण अपिशब्दस्य कर्मप्रवचनीयसंज्ञाविधानेनोपसर्गसंज्ञाया बाधाद् "उपसर्गप्रादु-

र्थाम्" इति स्यादित्यस्य सकारस्य षत्वन्नेत्यर्थः । पदस्याप्रयुज्यमानपदान्तरस्यार्थः पदार्थः, तद्योतकोऽपि कर्मप्रवचनीयसंज्ञकः । एवञ्चाप्रयुज्यमानस्य बिन्दुरित्यादेः पदस्यार्थोऽपिद्योत्यः । "उपसंवादाशङ्कयोश्च" इति सूत्रस्थभाष्यपठितेन "उपसंवादाशङ्कयोर्लिङ्" इति वार्तिकेन संभावनायां लिङ् । तत्राशङ्कोत्प्रेक्षा संभावनापि उत्कटकोटिकाऽऽशङ्कैवेति भावः । तस्याः सम्भावनाया विषयीभूते भवने कर्तृदौर्लभ्यप्रयुक्तदौर्लभ्यत्वरूपसंबन्धोऽपिद्योत्यः, बिन्दुना कर्तृत्वादुक्तसंबन्धेन स्यात्पदवाच्यक्रियायामन्वीयत इत्यर्थस्तदाह ( मूले )—अपि शब्दबलेनेत्यादि । एवञ्च सर्पिरवयवबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनेति बोधः ।

नन्वेवं कर्मप्रवचनीयसंज्ञकाविद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादिति ? तन्न । सर्पिषो बिन्दुना योगात् नत्वपिनेत्युक्तत्वात् । न च परम्परया तेनापि योग एवेति वाच्यम् । कर्मप्रवचनीयद्योत्योक्तसम्बन्धेनापिशब्देऽन्वयाभावात् ।

**प्रश्नः—"साधकतमं करणम्" इत्यस्मिन् सूत्रे तमब्ग्रहणाभावे 'गङ्गायां घोषः' इत्यत्र कथं दोष आपादितः, कथं च तस्य निरासः कृतः, तदुपपादय ।**

**उत्तरम्**—करणमिति महासंज्ञया 'क्रियतेऽनेन, इत्यन्वर्थबोधनेन क्रियासिद्धिसाधकस्यैव करणसंज्ञासिद्धौ साधकपदमेव साधकतमार्थं भविष्यतीति किं तमब्ग्रहणेनेति प्रष्टुराशयः । उक्तरीत्या व्यर्थं सत्तमब्ग्रहणं 'अस्मिन्कारकाधिकारे प्रकर्षविवक्षा नाश्रीयत, इति ज्ञापयति । तेन च 'गङ्गायां घोष' इत्यत्र सप्तमी सिध्यति । अन्यथा तुल्यन्यायेन 'अधिकरणम्' इत्यपि महासंज्ञया 'अधिक्रियते ऽस्मिन्, इत्यन्वर्थत्वेनैवाधारलाभे आधारपदमाधारतमार्थं भविष्यति । तथा सर्वावयवव्याप्यो य आधारस्तस्यैवाधिकरणसंज्ञायां तिलेषु तैलम् , दधनि सर्पिः, सर्वस्मिन्नात्मास्ति, इत्यादावेवाधिकरणसंज्ञा स्यान्नतु 'गङ्गायां घोषः' इत्यादावपि । अतस्तद्दोषवारणार्थमपि तमब्ग्रहणमिति फलम् ।

**प्रश्नः—"अनुर्लक्षणे" "हेतौ" "स्पृहेरीप्सितः" । इमानि सूत्राणि सोदाहरणानि व्याख्येयानि ।**

**उत्तरम्—लक्षणे**—लक्ष्यलक्षणभावसम्बन्धे, द्योत्ये ऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । पर्जन्यो जपमनुप्रावर्षत् इत्युदाहरणम् । ( कदा पर्जन्योऽवर्षदिति प्रश्ने

उत्तरमिदम् ) अत्र वृष्टिकाल उपदेश्यः ( स च दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकल-श्चन्द्र इतिवत् प्रज्ञानं किञ्चिदवलम्ब्यैव ज्ञाप्यः ) जपः प्रज्ञानम् । हेतुभूतजपोपलक्षणम् वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षत् । तत्र लक्षणत्वं हेतुत्वञ्चेति द्वयं तृतीयार्थः, तदुभयमनुना द्योत्यते । यद्यप्यत्र "लक्षणेत्थम्भूत" इत्यादिना सिद्धेः पुनः संज्ञाविधानसामर्थ्यात् परापि "हेतौ" इति तृतीयाऽनेन बाध्यते ।

हेतौ-हेत्वर्थे, तृतीया स्यादिति सूत्रार्थः । ननु हेतोरपि करणत्वादेव तृतीयासिद्धेः किमर्थमिदमिति चेद्, न । हेतुत्वकरणत्वयोर्भेदात् । तथाहि—द्रव्यं गुणं क्रियाञ्च प्रति यज्जनकं तत्र सर्वत्र हेतुर्वर्तते, किञ्च द्वारीभूतव्यापारवति तद्रहिते च सः क्रियाजनकमात्रवृत्ति व्यापारवृत्ति च यत्तदेव करणम् । दण्डेन घटः इत्युदाहरणे घटं प्रति दण्डो हेतुः, दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावात् करणत्वं न । पुण्येन दृष्टो हरिरित्युदाहरणे हरिदर्शनं प्रति पुण्यस्य हेतुत्वम् , पुण्यस्य हरिदर्शनजनकत्वेऽपि निर्व्यापारत्वान्न करणत्वम् । अत्र हेतुपदेन फलमपि गृह्यते, तेन अध्ययनेन वसति इत्यत्र वासफलमध्ययनेऽपि विवक्ष्यते अतोऽध्ययनहेतुत्वात् तृतीया सिद्धा ।

स्पृहेरीप्सितः—स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । 'पुष्पेभ्यः स्पृहयति' इत्युदाहरणम् । यदा तु ईप्सितत्वमात्रस्य विवक्षा;|न तु प्रकर्षस्य, तदा परत्वात् कर्मसंज्ञायां 'पुष्पाणि स्पृहयति' इत्यपि भवति ।

**प्रश्नः—अन्यकर्तृकोऽभिलाषो रुचिरिति पंक्तिर्व्याख्येया ।**

उत्तरम्—ननु हरिर्भक्तिमभिलषतीत्यत्रापि भक्तेः प्रीतिविषयत्वात् सम्प्रदानत्वं स्यादत आह—अन्यकर्तृकोऽभिलाषो रुचिरिति समवायेन प्रीत्याश्रयापेक्षया यदन्यत् तत्कर्तृकाभिलाषो रुच्धात्वर्थः । प्रीत्याश्रयकर्तृकः किञ्चिद्विषयक इच्छाविशेषोऽभिलाषः । तथाचाभिलषतेः रुच्यर्थकत्वाभावान्न तद्योगे सम्प्रदानत्वम् । उदाहरणे च प्रीत्याश्रयो हरिः तदपेक्षया यदन्यत् भक्तिः तत्कर्तृकैकप्रीतिरिति रुच्यर्थयोगः । ननूदाहरणे भक्तेः सम्प्रदानत्वं कुतो न स्यात् । विषयतासम्बन्धेन भक्तेरपि प्रीत्याश्रयत्वादित्यत आह—हरिनिष्ठेत्यादि । हरेरेव समवायसम्बन्धेन प्रीत्याश्रयतया प्रीयमाणत्वात् भक्तेः कर्त्र्या उक्तरीत्या प्रीयमाणत्वाभावाच्च न सम्प्रदानत्वमिति ।

**प्रश्नः—वने उपवसति, नदीमन्वसिता सेना, क्रोशं कुटिला नदी, शताय परिक्रीतः, आमुक्तेः संसारः, शतस्य दीव्यति, एषु विशेष-**

भक्तिविधायकानि प्रदर्श्य 'सप्तमीपञ्चम्यौ कारकमध्ये' इतिसूत्रं सोदाहरणं व्याख्यायताम् ।

उत्तरम्—वने उपवसति 'उपान्वध्याङ्वसः' इति सूत्रेण प्राप्तस्य वसेराधारस्य कर्मत्वस्य 'अभुक्त्यर्थस्य न' इति वार्तिकेन प्रतिषेधात् आधारसप्तम्येव । नदीमन्ववसितेति—'तृतीयार्थे, इति सूत्रेणानोः कर्मप्रवचनीयत्वे तद्योगे नदीमित्यत्र 'कर्मप्रवचीययुक्ते द्वितोया' इति द्वितीया । 'क्रोशं कुटिला नदी' इत्यत्र "कालाध्वनोरत्यन्तसंयोगे" इति सूत्रेणाध्वन्यत्यन्तसंयोगे द्वितीया । शताय परिक्रीतः "परिक्रयणे सम्प्रदानमन्यतरस्याम्" इति सूत्रेण सुवर्णादियत्किञ्चिद्द्रव्यशतस्य परिक्रयणे साधकतमस्य सम्प्रदानत्वे चतुर्थी । आमुक्तेरिति "आङ्मर्यादावचने" इत्याङः कर्मप्रवचनीयत्वे तद्योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । शतस्य दीव्यतीत्यत्र "दिवस्तदर्थस्य" इति कर्मणि षष्ठी । सप्तमीपञ्चम्याविति—अत्र कारकशब्दः कर्तृत्वादिशक्तिपरः न तु कर्त्रादिपरः । कारकयोर्मध्ये कारकमध्यं तस्मिन् कारकमध्ये । शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः इति सूत्रार्थः । अद्यभुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता । यद्यप्यत्र कर्ता एक एव, तथापि कर्तृपदेन कर्तृशक्तिर्गृह्यते, तस्याश्च कालभेदेन भिन्नत्वात् कारकमध्यत्वं निर्बाधमत एव चात्र सूत्रे कारकपदेन शक्तेर्ग्रहणमिति । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् कर्तृत्वकर्मत्वरूपशक्त्योर्मध्येऽयं देशः । अधिकशब्देन योगे सप्तमीपञ्चम्यौ विध्येते "तदस्मिन्नधिकम्" इति "यस्मादधिकम्" इति च सूत्रनिर्देशात् लोके लोकाद्वा अधिको हरिः ।

प्रश्नः—बहिर्योगे पंचमीत्यत्र किं प्रमाणं तत् प्रदर्श्य "कर्तृकर्मणोः कृति" इति सूत्रे कृतिग्रहणं सम्यक् प्रतिक्षिप्य तत्प्रयोजनं साधु समर्थ्यताम् ।

उत्तरम्—वर्जनार्थयोरपपर्योः कर्मप्रवचनीयसंज्ञायां तयोर्योगे "पञ्चम्यपाङ्परिभिः" इति सूत्रेण पञ्चम्येव भविष्यतीति तयोः साहचार्येणाञ्चूत्तरपदयोगेऽपि पञ्चम्या एव सिद्धत्वेन पञ्चम्यन्तेनासमासे सिद्धे "अपपरिबहिः" इति सूत्रे पंचमीपदं व्यर्थं सत् बहिर्योगे पंचमी भवतीति ज्ञापयति । तेन ग्रामाद्बहिरिति सिद्धम् ।

कृतपूर्वीकटमिति—

उत्तरम्— क्रियाजनकत्वं कारकत्वमिति सिद्धान्तेन "कर्तृकर्मणोः कृति" इति सूत्रे कर्तृकर्मभ्यां कारकाभ्यां क्रियाया आक्षेपो भवति । क्रिया च धातुवा-

प्रार्थयन्ते । वयस्याः प्रेरयन्तीति वयस्याः प्रियाभिः प्रार्थयन्तीति दशायां सख्या व्यापारत्यागे यादृशोऽर्थः शुद्धार्थधातोर्भवति तादृशोऽर्थो ण्यन्ते सत्यपि भवति । इत्थञ्च प्रिया यौवनेन लज्जां विहाय स्वस्वभर्तारं पुनरागमनाय स्वयमेव प्रार्थयन्तीति वाक्यार्थो भवत्यलम् ।

इति ण्यन्तप्रक्रिया ।

## अथ सन्नन्तप्रक्रिया ।

**प्रश्नः—'एषिषिषति' इति रूपं शङ्कानिरासपूर्वकं प्रसाधय ।**

**उत्तरम्**—इष्धातोः सन् इट् हलादित्वाभावेन कित्वाभावाद्गुणे एष् इ स ति इति स्थिते "अजादेर्द्वितीयस्य" इति षिस् इत्यस्य द्वित्वे हलादिशेषे सनः षत्वे रूपम् । नन्विह सत्यपि कित्वे नित्यत्वात् परमपि गुणं बाधित्वा षिस् इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाभावादेव गुणाप्रसक्तेर्हलादेरिति व्यर्थमिति चेद् ? न । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम्, ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकात् । तथाहि–ओणृधातोः ण्यन्तात्लुङि चङि "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वस्य "नाग्लोपि शास्वृदिताम्" इति निषेधे सति 'ओणि अ त्' इति स्थिते णि इत्यस्य द्वित्वे मा भवानोणिणत् इति रूपम् । अत्र उपधा ह्रस्वनिषेधार्थमोणेः ऋदित्करणम् । उपधाह्रस्वे कृते तु 'उण् इ अ त्' इति स्थिते णि इत्यस्य द्वित्वे मा भवानुणिणदिति स्यात् । ओकारो न श्रूयेत इति स्थितिः । यदि तु नित्यत्वात् उपधाह्रस्वात् प्रागेव 'ओण् इ अ त्' इत्यस्यां दशायां द्वित्वं स्यात् । तदा ओकारस्य उपाधात्वाभावादेव ह्रस्वाप्रसक्तेस्तन्निषेधार्थमृदित्करणमनर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकम् उपधाकार्यं द्वित्वात् प्रबलमिति विज्ञायते इत्यर्थः ।

**प्रश्नः—धिप्सति ऊर्णुनविषति इति संसाध्य "द्विर्वचनेऽचि" इति निषेधः कुतो नेति दर्शय ।**

**उत्तरम्**—धिप्सति दम्भधातोः सनि "दम्भ इच्च" इति इत्वे "सन्यङोः" इति द्वित्वे "अत्र लोपोऽभ्यासस्य" इति अभ्यासलोपे "हलन्ताच्च" इति हलग्रहणं जातिपरमित्याश्रित्य कित्वे "अनिदिताम्" इति नलोपे भष्भावे "खरि च" इति चर्त्वे धिप्सेति तस्य धातुत्वाल्लटि तिपि सार्वधातुकसंज्ञायां शपि पररूपे च

रूपम् । यदा "दम्भ इच्च" इति दीर्घेकारादेशस्तदा धीप्सति । यदा "सनीवन्त-र्ध" इत्यादीना पाक्षिके इटि दिदम्भिषतीति रूपत्रयम् ।

ऊर्णुनविषति—ननु ऊर्णोतेः सनि "सनीवन्तर्ध" इत्यादिना इटि द्वित्वा-त्प्राग् "सार्वधातुकार्धधातुकयोः" इति गुणेऽवादेशे च कृतेऽभ्यासे उकारस्य श्रव-णन्न स्यादिति चेद् ? न । "द्विर्वचनेऽचि" इति सूत्रेण गुणनिषेधात् । न चात्र "सन्यङोः" इति सूत्रेण सन्नन्तस्य द्वित्वं प्रति कार्यित्वादिटो निमित्तत्वं न स्या-दिति वाच्यम् । इड्टो द्वित्वरूपकार्यत्वाभावेन निमित्तत्वात् । अत्र "सन्यङोः" इति सूत्रेण प्रथमतः सन्नन्तसमुदायस्य द्वित्वरूपकार्यम्प्राप्तम्भवति, परञ्च "अजा-देर्द्वितीयस्य" इति सूत्रबलेन नुशब्दस्यैव द्वित्वरूपकार्यम्भवति न त्विटः । इत्थञ्च 'कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते' इति परिभाषाया अवसर एव ना-स्ति । यत्र कार्यमनुभवन् कार्यी वर्तते, तत्रैव कार्यी निमित्तत्वेन न स्वीक्रियते इति हि परिभाषार्थः । अत्र च 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति परिभाषया इट्रूपसन् द्वित्वन्नानुभवतीति दिक् ।

प्रश्नः—'अरिरिषति' अस्य सिद्धिं लिखत ।

उत्तरम्—ऋधातोः सनि वलादिलक्षणे इटि "सार्वधातुकार्धधातुकयोः" इति गुणे रपरत्वे "अजादेर्द्वितीयस्य" इति सूत्रबलेन रिस्शब्दस्य द्वित्वे सलोपे प्रयोगः सिद्ध्यति । न चात्र "द्विर्वचनेऽचि" इति निषेधात् द्वित्वे कर्तव्ये गुणादेशो न स्या-दिति वाच्यम् । इटो द्वित्वेन "कार्यमनुभवन्" इत्यादिपरिभाषया तस्य निमित्त-त्वायोगात् । अत्रेट एव द्वित्वं भवतीति कार्यित्वं वर्तते, इटो निमित्तत्वेन न गृह्यते इति "द्विर्वचनेऽचि" इति सूत्रन्न प्रवर्तते इति दिक् ।

प्रश्नः—'उचिच्छिषति' इदं रूपं शङ्कासमाधिपूर्वकं प्रसाधय ।

उत्तरम्—उच्छितुमिच्छतीत्यर्थे "धातोः कर्मणः समानकर्तृकात्" इति सनि आर्धधातुकत्वात् "आर्धधातुकस्येड्वलादेः" इतीटि "अजादेर्द्वितीयस्य" इति "स-न्यङोः" इति ( द्वित्वविषये "पूर्वत्रासिद्धीयमद्वित्वे" ) इति परिभाषयाऽसिद्धत्वं न वर्तते इति छिशब्दस्य द्वित्वे छकारलोपे चकारशेषे तस्माल्लटि तिपि शपि पररूपे च रूपम् । न चात्र 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया छलोपे सति तुकोऽपि निवृत्तिः स्यादिति वाच्यम् । "आख्यानात्" इत्यादिवार्तिके प्रकृतिप्र-त्ययापत्तिवचनेन "छ्वोः शूडनुनासिके च" इति सूत्रे तुग्विशिष्टछकारपाठेन च परि-

भाषाया अनित्यत्वज्ञापनात् । यदि परिभाषायाः प्रवृत्तिः सर्वत्र स्यात् तदा छकारस्य शकारे कृते तुको निवृत्तिः परिभाषयैव स्यादिति सूत्रे तुग्ग्रहणं व्यर्थमेव । तदेव व्यर्थं सदुक्तपरिभाषाया अनित्यत्वे प्रमाणं भवतीति दिक् ।

**प्रश्नः—शैषिकान्मतुबर्थीया–इत्यादिकारिका उदाहरणादिप्रदर्शनपुरस्सरं व्याख्येया ।**

**उत्तरम्—**शेषाधिकारे भवः शैषिकः । अध्यात्मादित्वाट्ठञ् । शैषिकात्–शेषाधिकभवप्रत्ययान्तात् शैषिकः सरूपः प्रत्ययो न भवति । तेन शालायां भवः शालीयः "वृद्धाच्छः" तदन्तात् शालीये भव इति वाक्यार्थे स छ एव न भवति किन्तु वाक्यमेव । विरूपस्तु भवत्येव । अहिच्छत्रे भव आहिच्छत्रः । भवार्थेऽण् । तदन्तादाहिच्छत्रे भव इति वाक्यार्थे वृद्धाच्छो भवति । आहिच्छत्रीयः । एवं मतुबर्थीयात् सरूपो मतुबर्थकः प्रत्ययो न । धनवानस्यास्तीति मतुबन्तान्मतुब्न । विरूपस्तु स्यादेव, दण्डिमती शाला । इह मतुबन्तात् इनिप्रत्ययो भवत्येव । सन्नन्तात्सन्नेष्यते । अर्थद्वारा च सादृश्यम् । तेनेच्छासन्नन्तात्सन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते, मीमांसिषते इति । इति सन्नन्तप्रक्रिया ।

---

# अथ यङ्लुगन्तप्रक्रिया ।

**प्रश्नः—यङ्लुगन्तात् आत्मनेपदं कथन्नेति प्रदर्श्य यङ्लुको भाषायां प्रवृत्तौ किम्मानमिति विस्तरेण ब्रूत ।**

**उत्तरम्—बोभवीति—**नन्वत्र प्रत्ययलक्षणेन ङित्वधर्ममानीय "अनुदात्तङित आत्मनेपदम्" इति सूत्रेणात्मनेपदं कथं न स्यादिति चेद् ? न । ङित्वस्य प्रत्ययाप्रत्ययोभयवृत्तित्वेन प्रत्ययलक्षणसूत्राप्रवृत्तेः । यो हि धर्मः केवलप्रत्यये तिष्ठति, तस्यैव धर्मस्य प्रत्ययलक्षणेनानयनं भवति, यश्च धर्मं प्रत्ययेषु वर्तते, अथ च धातुष्वपि वर्तते, तस्य धर्मस्यानयनं न भवति । ङित्वधर्मश्च यङादिप्रत्ययेषु वर्तते अथ च शीङादिधातुष्वपि वर्तते, इति तस्य धर्मस्यानयनं न भवति । अत एव शोभना दृषदो यस्मिन् प्रासादे इति विग्रहे प्रत्ययलक्षणेन असन्तत्वमादाय "अत्वसन्तस्य" इति दीर्घोऽपि न भवति । असन्तत्वस्योभयेष्वपि विद्यमानत्वात् ।

**यङ्लुको भाषायां प्रवृत्तौ मानम्—**"भूसुवोस्तिङि" इति गुणनिषेधे सिद्धे "बोभूतुतेतिक्ते०" इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति

नियमं करोति । एवञ्च यदि भाषायां यङ्लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति । न च द्वित्वे 'बोभू' इति समुदाये भूधातोरभावेन "भूसुवोस्तिङि" इति सूत्राप्राप्तौ गुणाभावो निपातनोय एवेति वाच्यम् । षष्ठाध्यायोस्थसूत्रेण यद्द्वित्वं भवति तत्पुनरपि तस्यैवोच्चारणं भवति, न तु नवीनस्य द्वितीयस्य भूशब्दस्य, "द्विः प्रयोगो द्विर्वचनं षाष्ठम्" इति सिद्धान्तात् ।

प्रश्नः—यकारवकारान्तानान्तूठ्भाविनामिति फक्किका साधु व्याख्येया ।

उत्तरम्—"छ्वोः शूड्" इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते नवेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम् । एतावानेव विशेषः । अनुवर्तमाने किद्ग्रहणे छः षत्वं वक्तव्यम् । अननुवर्तमाने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादि सिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यम् । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं ज्ञापकं "च्छ्वोः शूड्" इत्यनेन यत्रोठ् प्रवर्तते तत्रैव प्रवर्तते । तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात् । "ज्वरत्वर" इत्यादिसूत्रेण यत्रोठ् भवति, तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां सम्मतञ्च ।

प्रश्नः—ऋधातोर्यङ्लुकि आशीर्लिङि प्रथमपुरुषैकवचने का रूपसिद्धिः ।

उत्तरम्—ऋधातोर्यङ्लुकि द्वित्वे उरदत्वे हलादिशेषेऽभ्यासे रिकि आशीर्लिङि अरि ऋ यात् रीकि च अरी ऋ यात् इति स्थिते "अभ्यासस्यासवर्णे" इति इकारस्येयङि ऋकारस्य रिङादेशे 'अरियियात्' इति रूपम् । अत्र "लोपो व्योः" इति यलोपस्तु न, बहिरङ्गत्वेन रिङोऽसिद्धत्वात् । "अचः परस्मिन्" इति स्थानिवत्वाच्च । "न पदान्त" इति निषेधस्तु" न शङ्क्यः । स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवत् इत्युक्तेः । इति यङ्लुगन्तप्रक्रिया ।

## अथ नामधातुप्रक्रिया ।

**प्रश्नः—'अवगल्भाञ्चक्रे' अत्र शङ्कासमाधिरुच्यताम् ।**

**उत्तरम्**—अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । न चात्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्यानुनासिकत्वादिनिपातनाद् गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन आम् न स्यादिति वाच्यम् । 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात् । उक्तवचने प्रमाणञ्च—"आचारेऽवगल्भ" इत्यादिवार्तिकमेव । नचाचारेऽर्थे ऽवगल्भते इत्यादावात्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम् । "धातूनामनेकार्थाः" इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनादवगल्भते इत्यादौ तङः सिद्धत्वात् । वार्तिकेऽवोपसर्गविशिष्टपाठसामर्थ्येन केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च गल्भादिधातोः क्यङेवभवतीति माधवादयः । परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम् । किन्तु अवोपसर्गरहितेभ्यो गल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्येव वक्तुं युक्तम् । वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः । आत्मनेपदं तु गौणफलमिति दिक् ।

**प्रश्नः—'अवागल्भिष्ट' इति रूपं शङ्कानिरासपूर्वकं साधय ।**

**उत्तरम्—अवागल्भिष्ट**—अव उपसर्गात् गल्भ इत्यस्मात् "आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः" इति क्विपि धातुत्वाल्लुङि अनुदात्तेत्वादात्मनेपदे प्रत्यये च्लौ "च्लेः सिच्" इति सिजादेशे इटि प्रत्ययसकारस्य "आदेशप्रत्यययोः" इति षत्वे ष्टुत्वे, अडागमे कर्तव्ये उपसर्गस्य पृथक्कृत्वा गल्भशब्दात्पूर्वम् अटि दीर्घे च रूपम् । अत्र सङ्ग्राम-युद्धे इत्यत्र योऽयं ग्रामशब्द इत्युक्तोऽपि सामर्थ्यात् सङ्ग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति—'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियत इति सिद्धान्तादेव उपसर्गस्य पृथक् करणमिति दिक् ।

**प्रश्नः—'स्वमनायत' एतद्रूपं शङ्कानिरासपूर्वकं प्रसाध्य उपसर्गस्य पृथक्करणे सफलं ज्ञापकं प्रदर्शय ।**

**उत्तरम्**—असुमनः सुमनो भवतीत्यर्थे "भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" इति क्यङि सकारलोपे च कृते "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे क्यङन्तस्य

धातुत्वाल्लङि तङि सार्वधातुकसंज्ञायां शपि पररूपे मनःशब्दात्प्रागेवाटि यणि रू-पम् । ननु सुमनस्शब्दात् क्यङ्विधानेन सुमनस्शब्दस्याङ्गसंज्ञासत्वात् सुशब्दा-त्प्रागेवाट् भविष्यतीति तन्न, सङ्ग्रामयुद्ध इत्यत्र युद्धे सङ्ग्रामशब्दः स च समुपसर्ग-विशिष्ट एवास्ति न केवलग्रामशब्दस्ततो ग्रामशब्दपाठेनैव सङ्ग्रामशब्दलाभे समुपस-र्गविशिष्टपाठो व्यर्थीभूतो ज्ञापयति—धातुसंज्ञाप्रयोजकीभूतप्रत्ययस्य चिकीर्षितत्वे उपसर्गसमानाकारकपूर्वपदस्य पृथक्करणं भवतीति तात्पर्यात् । तेन 'स्वमनायत' इत्यादौ सूपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्ग-स्यापहरणं भवति; तत्र पृथक्करणन्न भवति । ततश्च ओढ इव आचर्येति विग्रहे आ-ङः पृथक्करणाभावेनाव्ययपूर्वपदत्वाभावाल्ल्यप् न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे "उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः", इति वार्तिकं तत्प्रत्याख्यानपर-कम् "आटश्च" इति सूत्रे चकारग्रहणञ्च प्रमाणम् । अन्यथा—औढीयदित्यादौ धातुसं-ज्ञायां कर्तव्यायाम् आङः पृथक्करणेन "ओमाङोश्च" इति सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव । एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । "आटश्च" इति सूत्रे चकारग्रहणम् "आटश्च" इति वृद्धिविषये यद्यत् कार्यं प्रा-प्नोति तत्तत्सर्वं निवारयतीति चकारग्रहणेनैव पररूपन्न स्यादिति वार्तिकं निष्प्रयो-जनमिति तद्भगवता प्रत्याख्यातम् ।

**प्रश्नः—'वृद्धौ सत्यां टिलोपः' अत्र ज्ञापकं फलञ्च प्रदर्शय ।**

उत्तरम्—"वृद्धेर्लोपो बलीयान्" इति भाष्यवचनात् पूर्वं टिलोपे अग्लोऽपि-त्वाद्दीर्घसन्वद्भावयोरभावात् 'अजहलत्' 'अचकलत्' इति रूपद्वयसिद्धौ 'हलिकल्यो-रदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय वृद्धौ सत्यां टिलोपो भवतीति वचनं ज्ञापयति । इत्थञ्च स्वांशे चरितार्थम् । फलञ्च—'अपीपटत् , अपपटत्' इति रूपद्वय-सिद्धिः । पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो भवति । ह-लिकल्योरदन्तत्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोप इति पक्षः सिद्धो भवति । ए-वञ्च प्रमाणद्वयेन मतद्वयं सिद्धम्भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति दिक् ।

**प्रश्नः—'स्वादयति' इति रूपं साधु प्रसाध्य "प्रकृत्यैकाच्" इति सूत्रस्य किम्फलमिति वद ।**

उत्तरम्—"मपर्यन्तस्य" इत्यधिकारात् "त्वमावेकवचने" इति सूत्रेण

त्वादेशे अन्तरङ्गत्वात् पूर्वम् "अतो गुणे" इति पररूपे ततः "प्रकृत्यैकाच्" इति टिलोपनिषेधे वृद्धौ च सत्यां तत्सिद्धिः। नच "प्रकृत्यैकाच्" इतिसूत्रस्योदाहरणं वार्तिककारेण प्रेष्ठः प्रेयान् इति दत्तम्। तच्चोदाहरणं भाष्यकारेण टिलोपे कर्तव्ये 'असिद्धवदत्राभात्' इति सूत्रेण प्रादेशस्यासिद्धत्वात् प्रादेशेऽकारोच्चारणसामर्थ्या-द्वेति हेतुद्वयेन साधितम्। एवञ्च "प्रकृत्यैकाच्" इति सूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम्। प्रेष्ठेत्यादिप्रयोगोऽन्यथासिद्धो न तु "प्रकृत्यैकाच्" इति सूत्रस्य मुख्यो-दाहरणमित्येव तद्भाष्याशयात्। मुख्योदाहरणन्तु 'त्वादयति, मादयति' इत्यादि। वार्तिककारोक्तोदाहरणमन्यथासिद्धमिति भाष्यतात्पर्यम्, न तु तत्सूत्रमेव न कर्त-व्यमिति तत्प्रत्याख्याने तात्पर्यमिति दिक्।

**प्रश्नः—'श्वानमाचष्टे' इत्यर्थे कानि रूपाणि शङ्कासमाधानञ्च किम्? तदुपपादय।**

**उत्तरम्—शुनयति**—श्वानमाचष्टे इत्यर्थे "तत्करोति तदाचष्टे" इति णिचि इष्ठवद्भावेन भत्वात् "श्वयुवमघोनामतद्धिते" इति सम्प्रसारणे पूर्वरूपे तस्माल्लटि तिपि शपि गुणे अयादेशे च रूपम्। अत्र "नस्तद्धिते" इति टिलोपो न, इष्ठनि टिलोप-स्यादृष्टत्वात्। ब्रह्मिष्ठ इत्यादौ तु परत्वात् "टेः" इत्यस्यैव प्रवृत्तेः। तस्मात् शुन-यति रूपम्। अन्येषाम्मते शावयतीत्यपि रूपम्।

तथाहि-श्वानमाचष्टे इति विग्रहे "नस्तद्धिते" इति टिलोपे "श्वयुवम-घोनामतद्धिते" इत्यनेन सम्प्रसारणे वृद्धौ च सत्यां तत्सिद्धिः। न चात्र "प्रकृत्यकाच्" इति प्रकृतिभावे टिलोपो न स्यादिति वाच्यम्। "येन नाप्राप्तिन्या-येन "टेः" इत्यस्यैव बाधकत्वात्। यत्र यत्र "प्रकृत्यैकाच्" इति सूत्रं प्रवर्तते, तत्र तत्र "नस्तद्धिते" इति सूत्रं न प्रवर्तते। "टेः" इति सूत्रं तु यत्र यत्र "प्रकृत्यैका-च्" इति प्रवर्तते, तत्र तत्र सर्वत्रैव प्रवर्तते, इति "टेः" इत्यस्यैव बाधकत्वम्। प्रेष्ठेत्यादौ "प्रकृत्यैकाच्" इति सूत्रविषये "नस्तद्धिते" इति न प्रवर्तते, "टेः" इति सूत्रं तु प्रवर्तत एव। इष्ठनि यद्यत् सूत्रं प्रवर्तते तस्यैव सूत्रस्यातिदेशो भवति। इत्थञ्च ब्रह्मिष्ठ इत्यादौ परत्वात् "टेः" इत्यनेनैव टिलोपः सिद्धो भवतीति "नस्त-द्धिते" इति सूत्रस्य तत्राप्रवृत्तिः। तथाच "नस्तद्धिते" इति सूत्राप्रवृत्तौ 'शुनयति' इत्येव रूपमिति केचित्।

**उत्तरम्**—तिर्यञ्चमाचष्टे इत्यर्थे णिचि इष्ठवद्भावेन टिलोपे तस्य बहिरङ्गत्वे-

नासिद्धत्वात् तिरसस्तिर्यादेशे वृद्धौ आयि 'तिरायि' इति स्थिते ततो लटि तिपि शपि गुणे अयादेशे पररूपे च रूपम् । नचात्र टिलोपेनाङ्गधातुत्वाभावात्कथं तिर्यादेश इति वाच्यम् । "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया तिर्यादेशे कर्तव्ये टिलोपस्यासिद्धत्वेन अङ्गधातुत्वसत्वात । नच तिर्य्यादेशे कृते पुनष्टिलोपः स्यादिति वाच्यम् । यथाऽपाचितरामित्यत्र "असिद्धवदत्राभात्" इति सूत्रेण प्रथमतल्लोपस्यासिद्धत्वेन तरब्घटकतकारस्य पुनः "चिणो लुक्" इति सूत्रेण लुक् न भवति, तथात्रापि प्रथमटिलोपस्यासिद्धत्वेन पुनष्टिलोपाभावात् । "अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्" इति परिभाषया वा पुनष्टिलोपाभावाच्चेति दिक् । इति नामधातुप्रक्रिया ।

---

## अथ कण्ड्वादयः ।

**प्रश्नः—कण्डवादीनां धातुत्वप्रातिपदिकत्वोभयस्वीकारे फलं प्रमाणञ्च निरूपय ।**

उत्तरम्—कण्डूञ् इति दीर्घपाठेन प्रातिपदिकाः इति ज्ञायत । तथाहि—'कण्डूञ् गात्रविघर्षणे' इति धातौ कण्डु इति ह्रस्वान्त एव पठितव्यः । "अकृत्सार्वधातुकयोः" इति दीर्घे कण्डूयते इति रूपं सेत्स्यतीति दीर्घान्तपाठो ज्ञापयति 'कण्ड्वादयः प्रातिपदिकाः' इति । यदि च कण्ड्वादयः प्रातिपदिकास्तर्हि "कण्ड्वादिभ्यो यक्" इति सूत्रे ककारोपादानं व्यर्थमेव स्यात् , तदेव व्यर्थं सद् ज्ञापयति—'कण्ड्वादयो धातवः' इति । इत्थञ्च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्चेत्युभयं सिद्धम् । अत एवोक्तं भाष्ये—

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः, इति ।

एवञ्च धातुपक्षे—'कण्डूयते' इत्यादीनां सिद्धिः । प्रातिपदिकत्वपक्षे—यकि असति सति क्विपि च कृते-कण्डूः धातुत्वादुवङि कण्ड्वा, कण्डुवः इति, प्रातिपदिकत्वे-यणि कण्ड्वौ कण्ड्वः इत्यादि । इति कण्ड्वादयः ।

---

## अथात्मनेपदप्रक्रिया ।

**प्रश्नः—आहध्वं मा रघूत्तममिति प्रयोगे शङ्कासमाधी निरूप्येताम् ।**

उत्तरम्—ननु आहध्वम् इत्यादिप्रयोगे रघूत्तमस्य कर्मत्वेन स्वीयाङ्गकर्मकत्वाभावादकर्मकत्वाभावाच्च "आङो यमहनः" इति सूत्रेण आत्मनेपदाभाव इति चेद् ? न । प्राप्येत्यध्याहारमाश्रित्य रघूत्तमम्प्राप्य मा हध्वम् इति प्राप्तिक्रियाम्प्रत्येव रघूत्तमस्य कर्मतया हन्तेरकर्मकत्वादात्मनेपदस्य निर्बाधात् । न च प्राप्येत्यध्याहारे श्वशुराज्जिह्रेतीतिवदत्रापि कर्मणि पञ्चम्या भाव्यमिति वाच्यम् । ल्यबन्तं विनैव यत्र ल्यबन्तार्थप्रतीतिस्तत्रैव "ल्यब्लोपे कर्मण्यधिकरणे च" इति वचनस्य प्रवृत्तित्वात् । अत्र तु ल्यबन्तं विना ल्यबन्तार्थभानं न भवति प्रत्युत मारणमेव प्रतिभातीति तस्याविषयत्वम् । अथवा भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वा कर्तव्यः । एवम् 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र विषमविलोचनस्य वक्षः प्राप्य आजघ्ने इति व्याख्यानेन हन्धातोरकर्मकत्वात्प्रयोगः साधुः । अथवा वक्षो भेत्तुमिति तुमुन्नन्ताध्याहारः कर्तव्यः, यथा—लोके मल्लोऽतिहर्षात्स्वस्यैव वक्षस्ताडयति, तथा विषमविलोचनस्य समीपमेत्य स्वकीयमेव वक्षः आजघ्ने ।

प्रश्नः—"णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने" अस्योदाहरणं संलक्षयताम् ।

उत्तरम्—पश्यति भवः इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भव इति चतुर्थकक्षायामुच्यते । एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धम्भवति । एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि अथवा पश्यन्ति भवमारोहन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणो हेतुत्वारोपाण्णिचि दर्शयति भवः आरोहयति हस्तीति । ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति । न च भवरूपकर्मणः कर्तृत्वाद् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम् । अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानक्रियत्वाभावात् । तृतीयकक्षायां तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियत्वात्तङ्सिद्धः । नच तृतीयकक्षायामपि चाक्षुषज्ञानविषयीकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम् । एवकारेणाधिकांशस्यैव निरसारितत्वात् ।

इत्यात्मनेपदप्रक्रिया ।

## अथ परस्मैपदप्रक्रिया ।

**प्रश्नः—"अनुपराभ्यां कृञः" इति सूत्रे कर्तरीत्येव भावकर्मणो-र्माभूत् इत्यादि फक्किका विशदं व्याख्यायताम् ।**

**उत्तरम्**—"अनुपराभ्यां कृञः" इत्यत्र भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्यानुवृत्तिरिति तत्त्वम् । ननु कर्तरीत्यस्यानुवृत्तावपि अनुक्रियते शब्दः स्वयमेवेत्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमिति चेद् ? न । कर्मकर्तरि "कर्मवत्कर्मणा तुल्यक्रियः" इत्यात्मनेपदेन परेणास्य बाधात् । ननु कर्मणि यच्छास्त्रं तत् 'कर्मवत्' इत्यनेन कर्मकर्तर्यतिदिश्यते । तथा चात्र कर्मकर्तरि भावकर्मणोरित्यात्मनेपदशास्त्रमिहातिदिश्यते तस्य च परत्वाभावात् कथमस्य बाधः स्यादिति चेद् ? न । शास्त्रातिदेशस्य कार्यसम्पत्तिफलकत्वात् कार्यातिदेशस्य मुख्यतया तस्यैवेहाश्रयणात् । एवञ्च प्रकृते आत्मनेपदविधायकं "कर्मवत्कर्मणा" इत्येव । तच्च "अनुपराभ्याम्" इत्यतः परमिति कर्मकर्तरि नास्य प्रवृत्तिः । यदा शास्त्रातिदेशपक्ष एवाश्रीयते, तदा "अनुपराभ्यां कृञः" इत्यत्र "कर्तरि कर्मव्यतिहारे" इत्यस्मादेकं कर्तृग्रहणमनुवर्तते, तथा "शेषात् कर्तरि परस्मैदम्" इत्यतो द्वितीयं कर्तृग्रहणमनुवर्तते । तथा च स्वभावत एव यः कर्ता न तु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपदमिति लभ्यते । एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरिति दिक् । इति पदव्यवस्था ।

---

## अथ भावकर्मप्रक्रिया ।

**प्रश्नः—'प्रकृतो मितां ह्रस्व एव तु न विकल्पितः' इत्यादिफक्किका विशदं व्याख्यायताम् ।**

**उत्तरम्**—ननु "चिण्णमुलोः" इति सूत्रे दीर्घग्रहणं व्यर्थम् । "चिण्णमुलोरन्यतरस्याम्" इत्येतावतैव "मितां ह्रस्वः" इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पासिद्धेरिति चेद् ? न । शमधातोर्ण्यन्ताण्णौ पूर्वणेर्लोपे लुटि तासि ण्यन्तस्याजादित्वाच्चिण्वदिटं तस्याभीयत्वेनासिद्धतया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति शमिता शामितेति रूपद्वयमिष्यते । ह्रस्वविकल्पविधाने तु ह्रस्वविकल्पो न स्यात् प्रथमणिलोपस्य "अचः परस्मिन्" इति स्थानिवत्वेन व्यवहिततया चिण्परकणिपरकत्वाभावात् । दीर्घविकल्पविधौ तु प्रथमस्य णिचो

लोपो न स्थानिवत् दीर्घविधौ स्थानिवत्वनिषेधात्। भाष्यकारस्तु "न पदान्त" इति सूत्रे "पूर्वत्रासिद्धे न स्थानिवत्" इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुस्वारदीर्घजश्चरविधीन् प्रत्याख्यातवान्। न च ण्यन्ताण्णौ "चिण्णमुलोः" इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्वं दुर्वारम्। "चिण्णमुलोः" इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात्। ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः। एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात्कथं दीर्घग्रहणस्य प्रत्याख्यानमिति चेत्? न। "चिण्णमुलोः" इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति यावत्। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्वेऽपि दीर्घस्य निर्बाधत्वात्। एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियतां मास्तु दीर्घग्रहणमिति भाष्यकाराशयः।

**प्रश्नः—द्विकर्मकेषु सोदाहरणं कर्मप्रत्ययविचारः प्रस्तूयताम्।**

**उत्तरम्—इत्थं हि द्विकर्मकाणां धातूनां कर्मप्रत्ययस्य व्यवस्था—**

गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥ इति।

दुह्याद्प्रभृतीनां द्वादशधातूनां गौणे कर्मणि लादयो भवन्ति। गौर्दुह्यते पयः। गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात्तस्मिन् कर्मणि लकारः। तिङा अभिहितत्वात् गोः प्रथमा। प्रधानकर्मत्वात्पय इति द्वितीयान्तम्। नीहृकृष्वहां प्रधाने कर्मणि लादयो भवन्ति। अजा ग्रामं नीयते, ह्रियते, कृष्यते उह्यते। अत्र अजायां प्रधानकर्मणि लकारः। ग्रामस्यानभिहितत्वात् द्वितीया। बुद्ध्यर्थकस्य भक्षार्थकस्य शब्दकर्मणाञ्च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति। बोध्यते माणवको धर्मम्। बोध्यते माणवकं धर्म इति वा, भोज्यते माणवकमोदनः। भोज्यते माणवक ओदनमिति वा। वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वा। अन्येषां गत्यर्थादीनां प्रयोज्यकर्मणि लकारः। देवदत्तो ग्रामं गम्यते, अत्र प्रयोज्यकर्मणि देवदत्ते इति गमेर्ण्यन्तात्कर्मणि लः। इति भावकर्मप्रक्रिया।

## अथ कर्मकर्तृप्रक्रिया ।

प्रश्नः—"कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रस्य कोऽर्थः, किञ्चोदाहरणम्, सूत्रेण कर्मणेत्यस्य वा किम्फलम् ।

उत्तरम्—"कर्मवत्कर्मणा तुल्यक्रियः" कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यादिति सूत्रार्थः । भिद्यते काष्ठम्, इत्युदाहरणम् । 'देवदत्तः काष्ठं भिनत्ति' द्विधाकरोतीत्यर्थः । अत्र भिद्धातोर्द्विधाभवनं द्विधाभावनञ्चेति व्यापारद्वयम्, तत्र द्विधाभावनस्य—कुठारादिपातनरूपस्य—आश्रयो देवदत्तः, काष्ठञ्च द्विधाभवनस्याश्रयः, ततः सौकर्यातिशयद्योतनाय यदा कुठारस्य उद्यमननिपातनादिः देवदत्तव्यापारोऽविवक्ष्यते, तदा द्विधाभवनरूपे स्वव्यापारे काष्ठस्य स्वतन्त्रत्वात्कर्तृत्वं सम्पद्यते; तस्य "कर्मवत्कर्मणा" इति सूत्रेण कर्मवद्भावाद्यगात्मनेपदयोः भिद्यते काष्ठम् । इति रूपम् । न चात्र द्विधाभवनरूपा या क्रिया कर्मस्था कर्मणः कर्तृत्वविवक्षायामपि सैव न तु तत्तुल्यां, तुल्यत्वस्य भेदघटितत्वात् तत्कथं कर्मत्वातिदेश इति वाच्यम् । वास्तवभेदाभावेऽपि कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारात् । कर्मणेति किम् ? कर्मणेत्यस्याभावे असिना छिनत्ति, स्थाल्यां पचतीत्यत्र करणाधिकरणयोर्यो व्यापारः स एवेदानीमसिश्छिनत्ति स्थाली पचतीत्यादौ कर्तृस्थ इति तत्रापि कर्मवत्त्वं स्यात्, तन्मा भूदित्येवमर्थं कर्मणेति पदमित्यर्थः । ननु तुल्यक्रियः कर्ता कर्मवद्भवति इत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्या कर्मणेति लभ्यत एवेति चेद् ? तर्हि 'गच्छति ग्रामः', आरोहति हस्तीत्यादौ कर्तृस्थक्रियेभ्यो कर्मवत्वनिवृत्यर्थं तदिति स्यात । न चैवमपि पचिभिदिप्रभृतीनामेव गमिरुहिप्रभृतीनां सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इति तु न शङ्क्यम् । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया नेतरत्र । नहि पक्कापक्वतण्डुलेष्विव गतागतग्रामेषु आरूढानारूढहस्तिष्वित्यादौ वा क्रियाकृतं वैलक्षण्यं प्रत्यक्षमुपलभ्यते इति ।

प्रश्नः—"तपस्तपः कर्मकस्यैव" इति सूत्रस्य किमुत्थानबीजम्, वृत्तिकारमतञ्चात्र कीदृशम्, तदायुष्मते रोचते न वा ।

उत्तरम्—उपवासादिरूपतपस्तापसं तपति दुःखीकरोतीत्यर्थः । एवञ्च तापसस्य कर्मत्वे तप्धातोर्दुःखजननमर्थः । तापसः स्वयमेव तप्यतेऽर्थात्तप अर्जयतीति

तापसस्य कर्तृत्वे तपेरर्जनरूपार्थः। एवं हि कर्मस्था क्रिया दुःखजननरूपा, कर्तृस्था क्रिया तु अर्जनरूपेति क्रियाभेदात्सकर्मकत्वाच्चाप्राप्ते कर्मवद्भावे "तपस्तपः कर्मकस्य" इति सूत्रं विध्यर्थम्। एवकारस्तु व्यर्थ एवेति वृत्तिकारादयः। वस्तुतस्तु कर्मत्वकर्तृत्वरूपावस्थाद्वयेऽपि तापस उपवासादिजन्यकृशतादिरूपशरीरसन्तापमनुभूय पुण्यविशेषमर्जयतीति कर्मस्था क्रिया कर्तृस्था क्रिया च समानेति कर्मवद्भावे प्राप्ते सकर्मकाणां कर्मवद्भावश्चेत्तर्हि तपेरेव' इति नियमार्थं सूत्रम्। तथा च 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकमपि न कर्तव्यम्। नियमेनैव एवकारे लब्धे सूत्रे एवकारग्रहणं व्यर्थं सत् 'तपधातोरपि यदि कर्मवद्भावश्चेत्तर्हि तपः कर्मकस्यैवेति द्वितीयनियमं करोति। तेन सुवर्णमुत्तपतीत्यादौ कर्मवद्भावो न भवतीति फलमिति दिक्। इति कर्मकर्तृप्रक्रिया।

---

## अथ लकारार्थप्रक्रिया।

**प्रश्नः—'याहि याहीति याति' इति विशेषशास्त्रकार्यप्रदर्शनेन साधय।**

उत्तरम्—'याहि याहीति याति' इत्यत्र "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" इति लोट्, तस्य सर्वपुरुषवचनविषये परस्मैपदिभ्यः कर्तरि हिः, एवञ्च याहीति अत्र "यथाविध्यनुप्रयोगः पूर्वस्मिन्" इति लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः, तत अनुप्रयोगात् यथा-यथं लडादयस्तिबादयश्च भवन्ति, ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः। अत्र "क्रियासमभिव्याहारे द्वे वाच्ये" इति द्वित्वे याहि याहीति याति, यातः, यान्ति, इत्यनुप्रयोगात्सर्वलकाराः सर्वपुरुषवचनानि च भवन्ति। पुनः पुनरतिशयेन वा एककर्तृकं वर्तमानकालिकं यानं यातीत्यर्थः। अत्रेतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयतीति दिक्।

इति लकारार्थप्रक्रिया।

---

## अथ कृदन्तकृत्यप्रक्रिया।

**प्रश्नः—"अचो यत्" इति सूत्रं कर्तुमशक्यं न वेति प्रतिपादय।**

उत्तरम्—हलन्तेभ्यो ण्यत्प्रत्ययस्य विशिष्य विधानं भवतीति विशेषविहितत्वेन ण्यत्प्रत्ययो यत्प्रत्ययस्यापवादो भविष्यतीति, अर्थादेवाजन्तेभ्यो धातुभ्योऽयंप्रत्ययः स्यादिति सूत्रेऽज्ग्रहणं न कर्तव्यम्। एवञ्च अज्ग्रहणे प्रत्याख्याते यत्सूत्र-

हणमपि "तव्यत्तव्यानीयरः" इति सूत्रे एव कर्तव्यम्। न चाण्ग्रहणाभावे "वाऽसरूपोऽस्त्रियाम्" इति परिभाषया ण्यत्प्रत्ययाभावपक्षे हलन्तेभ्योऽपि धातुभ्यो यत्प्रत्ययप्रसङ्गः स्यादिति वाच्यम्। "नानुबन्धकृतमसारूप्यम्" इति परिभाषया ण्यद्यतोः सरूपत्वात्। द्वयोः प्रत्यययोः समानरूपत्वेन "वाऽसरूप" इति सूत्राप्रवृत्तिरिति दिक्।

**प्रश्नः—'इचेति ह्रस्वः सुपठः' इति केनाभिप्रायेणोपस्थितमिति लिख।**

उत्तरम्—खनूधातोः क्यपि नकारस्य ह्रस्वेकारे आद्गुणे च खेयमितिरूपसिद्धिर्निर्बाधा। दीर्घस्य ह्रस्वस्य वा आद्गुणे विशेषाभावात् अतस्तत्सूत्रे ह्रस्व एवेकारो विधेयो न तु दीर्घः, ह्रस्वविधाने मात्रालाघवात् इति। ननु इचेति ह्रस्वादेशाभ्युपगमे|तस्यादेशस्य पूर्वेण सह आद्गुणे तस्यासिद्धतया "ह्रस्वस्य पिति" इति तुक् स्यात् "षत्वतुकोरसिद्धः" इति षत्वे तुकि च कर्तव्ये एकादेशशास्त्रस्यासिद्धत्वस्वीकारात् इति चेद्? न। तुग्विधौ पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपीति सिद्धान्तात्।

**प्रश्नः—'भार्या वधूः' इत्यत्र क्यप् भवति नवेति वद।**

उत्तरम्—ननु "भृञोऽसंज्ञायाम्" इति सूत्रे भार्याः क्षत्रिया इति पुँल्लिङ्गे संज्ञायां क्यपोऽभा[ वं] कुर्वत्सच्चरितार्थमिति स्त्रीलिङ्गे संज्ञायां न प्रवर्तिष्यते इति भार्या वधूरित्यत्र "संज्ञायां समजनिषत्" इत्यादिना क्यपा भाव्यमिति चेद्? न। "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" इति परिभाषया 'डुभृञ् धारणपोषणयोः' इत्यस्मात्क्र्यादिपठितदीर्घान्तात भॄ भरणे इत्यस्माद् वा ण्यन्तप्रत्ययस्य सिद्धत्वात्। "संज्ञायां समजनि" इत्यादिसूत्रे ह्रस्वान्तभृञ्धातोः पाठेन दीर्घान्तभॄधातुविषये तत्सूत्राप्रवृत्तिः। डुभृञ्धातौ अनुबन्धद्वयं वर्तते, भृञ्धातौ चैकनुबन्धो वर्तते, इति डुभृञ्धातुविषयेऽपि तत्सूत्राप्रवृत्तिरिति दिक्।

**प्रश्नः—"नक्कादेः" इति सूत्रस्य उपयोगोऽस्ति न वेति प्रतिपादय।**

उत्तरम्—"चजोः" इति सूत्रे निष्ठायां ये धातवोऽनिटो भवन्ति तेषामेव कुत्वं भवतीति व्याख्याय "न क्वादेः" इति सूत्रं प्रत्याख्यातं वार्तिककारेण। एवञ्च गर्जितर्जिप्रभृतीनां धातूनां निष्ठाविषये सेट्त्वात्कुत्वन्न भवति। ग्रुचुग्लुचुप्रभृतीनां तु उदित्वात् "उदितो वा" इति सूत्रेण क्त्वार्थां वेट्त्वात् "यस्य विभाषा"

इति सूत्रेण निष्ठाविषये इडागमो न भवतीति "चजोः" इत्यनेन कुत्वम् । एवञ्च "न क्वादेः इति सूत्रसत्तायां गु[illegible] तीनां धातूनां कुत्वन्न भवति, सूत्राभावे तु प्राप्नोति इति मतद्वये प्रयोगै[illegible] . "यथोत्तरं मुनीनां प्रामाण्यम्" इति परिभाषया वार्तिकमतमेव युक्तम्

प्रश्नः—"प्रैषादि" सूत्रे कृत्यग्रहणं कर्तव्यं न वा ।

उत्तरम्—"वासरूपोऽस्त्रियाम्" इति परिभाषया क्तोट्कृत्यसंज्ञकप्रत्ययश्च पर्यायेण भविष्यतीति "प्रैषादि" सूत्रे कृत्यग्रहणं स्त्र्यधिकारादूर्ध्वं "वासरूपोऽस्त्रियाम्" इति सूत्रं क्वचिन्न प्रवर्तते इति ज्ञापयति । एवञ्च 'क्तल्युट्तुमुन्खलर्थेषु मिथो बाध्यबाधकभावो न भवती'ति वचनं सिद्धम् । तेन हसितं हसनमिति भावे विहितयोः क्तल्युट्प्रत्यययोर्विषये "भावे" इति सूत्रेण घञ् प्रत्ययो न भवति । अथ च ईषत्पानः इति खलर्थे खल्प्रत्ययश्च न भवतीति फलम् । अत्र लाघवात् "शकि लिङ् च" इति सूत्रे चकारग्रहणेनैव पूर्वोक्तज्ञापनसम्भवे प्रैषादिसूत्रे कृत्यग्रहणन्न-कार्यमिति दिक् । इति कृदन्तकृत्यप्रक्रिया ।

## अथ कृदन्तप्रकरणम् ।

प्रश्नः—"सुप्यजातौ णिनिस्ताच्छील्ये" इति सूत्रे वृत्तिकारभाष्यकारयोः को मतभेदः कथञ्च स इति स्पष्टमभिधीयताम् ।

उत्तरम्—"सत्सूद्विष" इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणमिति वृत्तिकारादीनां मतम् । भाष्यकारास्तु-"सत्सूद्विष०" इति सूत्रे "सुपि स्थः" इत्यतः सुपीत्यनुवर्तते । तच्चोपसर्गेतरपरम् , उपसर्गेऽपीति पृथगुक्तेः। तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादतः पुनः सुब्ग्रहणमनाश्रितोपसर्गानुपसर्गविशेषस्य सुबन्तमात्रस्य ग्रहणार्थमित्याहुः । तेन 'स बभूवोपजीविनाम्' इत्यादिप्रयोगैः सुबन्तमात्रे णिनिरिति सङ्गच्छते ।

प्रश्नः—"निष्ठायां सेटि" इति सूत्रे सेड्ग्रहणस्य प्रयोजनं लिख ।

उत्तरम्—ननु अनिटि "णेरनिटि" इति सिद्धत्वात् सेडर्थमेवेदं सूत्रं भविष्यतीति चेद् ? न । कालावधारणार्थमस्यावश्यकत्वात् । यदि निष्ठा सेट्त्वमापद्येत, तदेव णिलोपो न तु ततः प्रागिति । अन्यथा ण्यन्तात्कृधातोः क्तप्रत्यये नित्यत्वादिडागमात्पूर्वमेव णिलोपे तत "एकाच उपदेशेऽनुदात्तात्" इति इटःप्रतिषेधः स्यात् । एतदपि फलं पूर्वस्मादपि विधौ स्थानिवद्भावमनाश्रयणे, तदाश्रये, तु नेदं प्रयोजनम् । भाष्ये तु सूत्रमिदं प्रत्याख्यातम् । "णेरध्ययने" इति सूत्रे

योगविभागात् वृत्तमिति निपातनस्य नियमार्थत्वेन वृत्तादन्यत्र कारितमित्यादौ णिलोपाभावविज्ञानात् ।

प्रश्नः—'सानुमतः प्रफुल्लम्' इत्यत्रस्थदोषवारणेन सूत्रं सफलय।

उत्तरम्—ननु "अनुपसर्गात्फुल्लक्षीब" इत्यादिनोपसर्गाभावे निष्ठावयवतकारस्य लत्वं निपात्यते । अत्र तु उपसर्गस्य सत्वेन लत्वनिपातनमसम्भवमिति चेद् ? न । 'फुल्ल—विकसने, धातोः पचाद्यचि सति रूपस्य सिद्धत्वात् । नचैवं सत्युपसर्गे फुल्लधातोः रूपसिद्धौ सूत्रं व्यर्थमेवेति वाच्यम् । उपसर्गाभावे फुल्लाद्यनिष्टवारणेन सूत्रस्य सफलत्वात् । 'फुल्लवान्' इति रूपसिद्धये "अनुपसर्गात्फुल्लक्षीब" इत्यादिसूत्रमावश्यकम् ।

प्रश्नः—'घृषिशसी वैयात्ये" इदं सूत्रं विध्यर्थमुत नियमार्थम्, अत्र मतान्तरं निरस्य सिद्धान्तः प्रदर्शनीयः ।

उत्तरम्—घृषेरादित्वात् "आदितश्च" इत्यनेन शसुधातोरुदित्वात् "यस्य विभाषा" इत्यनेन सूत्रेणेण्निषेधे सिद्धे "धृषिशसी वैयात्ये" इ ं सूत्रम् अविनये एवैतौ अनिटौ स्त इति नियमयति । एवञ्चान्यत्रार्थे इटि सति 'धर्षितः विशसित इति रूपद्वयसिद्धिः । नच घृषेर्भावादिकर्मणोरर्थयोः प्रत्यये "विभाषा भावादिकर्मणोः" इत्यनेन पाक्षिके इटि प्राप्ते तन्निषेधार्थं विध्यर्थमेवास्तु इति वाच्यम् । वैयात्येऽर्थे भावादिकर्मणोर्धृषेर्विधानाभावात् । इत्थञ्च नियमार्थमेवेति वृत्तिकारादयः । हरदत्तस्तु—घृषिधातौ आकारग्रहणस्य फलाभावादकरणेन "आदितश्च" इति सूत्राप्रवृत्तौ इटः प्राप्तौ सत्यां तन्निषेधार्थं सूत्रं विध्यर्थमेवेत्याह । तन्मते—वैयात्येऽर्थे इड्रहितप्रयोगोऽन्यत्रार्थे चेट्सहितप्रयोगः सिद्धः । पाणिनिना आकारग्रहणं कृतमिति भावादिकर्मणोः प्रत्यये जाते "विभाषा भावादिकर्मणोः" इति प्राप्तस्येटो निषेधार्थं सूत्रं विध्यर्थमेवेत्याह माधवः । एवञ्च वैयात्येऽर्थे धृष्टमित्येकं रूपम् । अन्यत्रार्थे च धृष्टम्, धर्षितमिति रूपद्वयं सिद्धम् । अयमेव पक्षो ज्यायान् इति दिक् ।

प्रश्नः—घिनुण उकार उच्चारणार्थः, प्रयोजनार्थो वा इत्यभिधीयताम् ।

उत्तरम्—घिनुणि उकार उच्चारणार्थो नत्वनुबन्धः । सति ह्यनुबन्धे शमि, नौ शमिन इत्यत्र "उगिदचाम्" इति नुम्प्रसज्येत, शमिनितरेत्यत्र "उगितश्च"

इत्यन्यतरस्यां ह्रस्वः स्यात्, इष्यते तु नित्यमिति । अत्र उकार उच्चारणार्थ एवेति वृत्तिकारादयः । भाष्यमते तु अनुबन्ध एव, शमिनितरेत्यत्र ह्रस्वविकल्पस्येष्टत्वात् । शमीत्यादौ नुम्प्रसङ्गस्तु तद्विधौ झल्ग्रहणमपकृष्य झलन्तानामेतद्विधानाद् वार्यते इति ।

**प्रश्नः—'विदत्तम्' इत्यत्र "दस्ति" इत्यनेन दीर्घः कथं न, सन्निपातपरिभाषया नत्वं धत्वञ्च कथं वारितमिति सुष्ठूपपादय ।**

**उत्तरम्**—न च दत् इति तान्तादेशपक्षे विदत्तमित्यादौ "दस्ति" इति सूत्रेणोपसर्गस्य दीर्घः स्यादिति वाच्यम् । तकारादौ प्रत्यये परे तद्विधानात् । अत्र तु दकारादिप्रत्ययः । एवं ददिति दान्तादेशे दध इति धान्तादेशे वा न काप्यनुपपत्तिः । न च दान्तादेशे "रदाभ्याम्" इति नत्वं धान्तपक्षे च "झषस्तथोर्धोऽधः" इति तकारस्य धत्वञ्च स्यादिति वाच्यम् । धातुतकारयोस्सम्बन्धेन जायमानो ददादेशो दधादेशो वा तयोः सम्बन्धविघातके नत्वे धत्वे च कर्तव्ये कारणं न भवतीति सन्निपातपरिभाषाया विरोधात् । यदि प्रादय उपसर्गाः, तदा "अच उपसर्गात्तः" इति तादेशे प्रत्तोऽवत्त इत्यादिप्रयोगाः सिध्यन्ति । यदा च प्रादय उपसर्गप्रतिरूपकाः, तदा प्रदत्तमवदत्तमित्यादिप्रयोगाः सिद्ध्यन्तीति ।

'अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते' इति वचनं निसृतम् ।

**प्रश्नः—'यायावरः' इति रूपं शङ्कानिरासपूर्वकं साधय ।**

**उत्तरम्**—यायायत इति विग्रहे "यश्च यङः" इति वरचि "अतो लोपः" इत्यकारलोपे "लोपो व्योर्वलि" इति यलोपे च कृते रूपं सिद्धम् । नचात्राल्लोपस्य स्थानिवद्भावेन वल्परत्वाभावात् यलोपो न स्यादिति वाच्यम् । "न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति स्थानिवद्भावनिषेधात् । न च अल्लोपस्य स्थानिवत्त्वेन आर्धधातुकत्वमाश्रित्य "आतो लोप इटि च" इत्याकारलोप इति वाच्यम् । "वरे लुप्तं न स्थानिवत्" इति निषेधादिति दिक् ।

इति पूर्वकृदन्तम् ।

---

## अथोत्तरकृदन्तम् ।

**प्रश्नः—'अर्थग्रहणमस्तिनैव सम्बध्यते' केनाभिप्रायेणेदं वाक्यं समुपस्थितमिति दर्शय ।**

उत्तरम्—अर्थग्रहणमस्तिनैव सम्बध्यते । अर्थग्रहणस्य समीपे अस्तिर्वर्तते, इति अनन्तरत्वात् शकधशज्ञानां चटार्हयोश्च पृथगुपादानादर्थशब्दोऽस्तिनैव सम्बध्यते, न तु शकादिभिरिति तदाशयः । लोकयुक्त्यापि च सिद्धमिदम् । यथाहि—कस्मिश्चिदध्यापनादेः स्थाने रिक्ते सति तल्लब्धुं दूरस्थाः समीपस्थाश्च सर्वे पुरुषाः प्रयतन्ते, परञ्च तत्र निकटवर्तिन एव पुरुषास्तत्स्थानं लभन्ते । तथैव यद्यर्थग्रहणस्य अस्तिना सह सम्बन्धे जाते आकाङ्क्षा निवृत्ता भवति, तदा अन्यपदार्थे तदन्वयप्रयासो व्यर्थ इति दिक् ।

प्रश्नः—"निवासचिति" इति सूत्रे चः कः इत्येव वक्तव्ये आदिग्रहणं किमर्थम् ?

उत्तरम्—"निवासचितिशरीर" इत्यादिसूत्रे चः कः इत्येव वक्तव्ये आदिग्रहणमादिभूतस्यैव चकारस्य ककारः स्यादिति बोधनार्थम् । तेन यङ्लुकि गोमयानां निकेचाय इत्यत्रादिचकारस्यैव कुत्वं भवति नतूत्तरस्येति ।

प्रश्नः—"कर्मणि च येन" इति सूत्रे कर्तुर्ग्रहणं किमर्थम् ?

उत्तरम्—कर्तुः किम् ? गुरोः स्नापनं सुखम् । अत्र गुरोः सुखानुभवस्य कर्तृत्वेऽपि ल्युट्प्रकृतेः स्नापयतेः कर्तृत्वाभावान्नानेन सूत्रेण ल्युट् , अपि तु "ल्युट् च" इति सूत्रेण । तेन नित्योपपदसमासस्याभावः । अनेन तु ल्युटि नित्योपपदसमासः स्यात् ।

प्रश्नः—अतिसुलभम्, अतिदुर्लभम्' इत्यत्र "उपसर्गात्खल्घञोः" इति नुम् कथं नेति प्रदर्शय ।

उत्तरम्—ननु 'अतिसुलभम्' इत्यादावुपसर्गद्वयेन "नसुदुर्भ्याम्" इतिसूत्राप्रवृत्तौ "उपसर्गात्खल्घञोः" इति सूत्रेण नुम् स्यादिति चेत् ? न । स्वत्योः कर्मप्रवचनीयसंज्ञासत्वेन उपसर्गत्वाभावात् "उपसर्गात्खल्घञोः" इति सूत्राप्रवृत्तेः । यदा अतेः कर्मप्रवचनीयसंज्ञा भवति, तदा सु इत्येकोपसर्गत्वेन "सुदुर्भ्याम्" इति सूत्रेण नुमो निषेधः । यदि च सोः कर्मप्रवचनीयसंज्ञा भवति, तदा उपसर्गात्परत्वाभावेन "उपसर्गात्खल्घञोः" इति सूत्राप्रवृत्तिरिति उभयथापि नुमोऽभावः सिद्धः । इत्थञ्च उभयोः कर्मप्रवचनीयसंज्ञा भवतीति दिक् ।

प्रश्नः—"नशे अग्निधल्यर्पूतिकिति" इति सूत्रे ल्यबग्रहणं किमर्थं तत्सफलं लिख ।

उत्तरम्—ननु "अदो जग्धिर्ल्यप्ति किति" इति सूत्रे ल्यब्ग्रहणाभावेऽपि प्रपूर्वकाद्धातोः क्त्वाप्रत्यये कृते "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति सूत्रेण ल्यबादेशे "अदो जग्धिः" इत्यादिना जग्ध्यादेशे च प्राप्ते 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया जग्ध्यादेश एव स्यादिति "अदो जग्धिः" इत्यत्र ल्यब्ग्रहणं व्यर्थमेव स्यादिति चेद् ? न । "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते" इति परिभाषाज्ञापनेन ल्यब्ग्रहणस्य सफलत्वात् । तेन विधाय इत्यत्र "दधातेर्हिः" इति हित्वन्न । 'प्रदाय' इत्यत्र च "दोदद्घोः" इति दत्वन्न । 'प्रखन्य' इत्यत्र "जनसनखन" इत्यात्वन्नेत्यादि ।

प्रश्नः—'मूलकोपदंशम्भुङ्क्ते' अत्र सामर्थ्याभावात् णमुल्प्रत्ययः समासश्च कथमिति लिख ।

उत्तरम्—ननु मूलकेनोपदंशं भुङ्क्ते इति विग्रहे ल्यबन्तसकर्मकदंशधातुयोगे मूलकस्य शब्दतः कर्मत्वाभावेन मूलकोपदंशयोः सम्बन्धाभावेन सामर्थ्याभावात् "उपदंशस्तृतीयायाम्" इत्यनेन णमुल्प्रत्ययः, "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति समासश्चात्र दुर्लभ इति चेद् ? न । किमुद्दिश्य भुङ्क्ते इति कर्मणोऽपेक्षायाम्मूलकमुपदश्य भुङ्क्ते इत्यर्थेन मूलकस्य कर्मत्वं समायाति । मूलकस्य दंशधातुना सहार्थसम्बन्धस्य सत्वात् । यदि तृतीयायाः शब्दत एवान्वये प्रत्यय इष्यते, तर्हि 'करणे हनः' इतिवत् 'उपदंशः करणे' इत्येव वदेत् । एवञ्च तृतीयाग्रहणसामर्थ्येन आर्थसम्बन्ध एवात्रेष्टः । शब्दतस्तु मूलकं भुजिक्रियाम्प्रति करणमेवेत्यलम् । इति शिवम् ।

इत्युत्तरकृदन्तप्रकरणम् ।

नासिके गालणे ग्रामे महादेवाऽभिदः सुधीः ।
दामोदरस्तस्य सुतस्तत्सुतः श्रीसदाशिवः ॥ १ ॥
शास्त्रिणः श्रीगणपतेर्लब्धविद्यः सुधीरयम् ।
व्यातनोल्लघुकौमुद्यां मञ्जूषायाञ्च शोकके ॥ २ ॥
प्रश्नोत्तरी फक्किकानां विद्यार्थिप्रीतयेऽकरोत् ।
प्रीयतां तेन विश्वेशः सर्वदा श्रीसदाशिवः ॥ ३ ॥

इति श्रीकौण्डिन्यकुलावतंस—जोशीत्युपाह्वदामोदरात्मजसदाशिवशास्त्रिविरचितेयं फक्किकाप्रश्नोत्तरी समाप्तिमगमत् ।

समाप्तोऽयं ग्रन्थः ।

विद्याविलास प्रेस, बनारस सिटी ।

# कौमुदीकल्पलतिका

## [ सिद्धान्तकौमुदीगुप्तरहस्यप्रकाश ]

इस ग्रन्थमें नई कल्पनायें, नये २ न्यास, पङ्क्तियों की सरल व्याख्या, शास्त्रार्थ की अपूर्व कोटियां तथा करीब ५० सूत्रों के परिष्कृत शाब्दबोध को देख कर अन्य सूत्रों के शाब्दबोध बड़ी सुगमता से बनाये जा सकते हैं। इसमें स्वरवैदिक-प्रकरण की पङ्क्तियों की भी व्याख्या परीक्षोपयोगी की गई है, अतः इस ग्रन्थ से परीक्षा तथा शास्त्रार्थ तथा सिद्धान्तकौमुदी को पढ़ने पढ़ाने आदि में बड़ी सुविधा होती है। इतना होने पर भी उपकारार्थ ग्रन्थ का केवल मूल्य १॥)

# न्यासकल्पलता

इसमें नये नये अपूर्व न्यास, तथा साम्प्रदायिक कोटियाँ जिन्हें शास्त्रार्थी लोग छिपाया करते थे सब प्रकाशित कर दी गईं। इसमें म० म० श्रीशिवकुमार शास्त्री जी आदि के न्यास तथा मैथिलसम्प्रदाय के भी न्यासों का शास्त्रार्थ दिखाया गया है। इस ग्रन्थ की महत्ता देखनेसे ही शास्त्रार्थ प्रेमी समझ सकते हैं। मूल्य ॥)

# पाणिनीयव्याकरणे वादरत्नम् १—२ भाग

न्यायव्याकरणाचार्य मीमांसकशिरोमणिना श्रीसूर्यनारायणशुक्लेन विरचितम्।

प्रथमभाग में न्यास प्रकरण तथा द्वितीय भाग में परिष्कार प्रकरण है। न्यास-परिष्कार का इसके मुकाबले दूसरा ग्रन्थ आज पर्यन्त अन्यत्र छपा ही नहीं। इन दोनों भागों को संग्रह करलेने से फिर इस विषय के किसी भी ग्रन्थ के संग्रह करने की आवश्यकता न होगी। मूल्य प्रथम भाग १॥) द्वितीयभाग १।)

# फक्किकाप्रकाश

**म० म० पण्डित श्रीसीतारामशास्त्रीकृतबृहट्टिप्पणीसहित**

सिद्धान्तकौमुदी की सम्पूर्ण फक्किका अर्थात् क्लिष्ट पङ्क्तियोंका सरल व्याख्यान मूल्य १।)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।

